भारतनररत्नमालायाः षष्ठं रत्नम्

# श्रीशिखगुरुचरितामृतम्



लेखकः—

हसूरकरोपाह्वः श्रीपादशास्त्री,

( न्यायवेदान्तमीमांसातीर्थः, सांख्यसागरः, पण्डितरत्नम्

प्रिन्सिपाल, संस्कृत कॉलेज, इन्दोर. )

एतच्च

इन्दोरनगरे सहकारिमुद्रणालयाधिपतिना

प्रकाशकस्य कृते मुद्रापितम्.

शकाब्दाः १८५५.  खिस्ताब्दाः १९३३.



मूल्यम्—पादोनं रूप्यकद्वयम्. ( १-१२-० )

# प्रस्तावना.



अयि प्रियबान्धवाः! सज्जनाः! सनातनधर्मानुयायिनो भारतवासिनः! इदमलौकिकस्वार्थत्यागशालि प्रस्फुरत्सात्विकबलं सर्वव्यवहारादर्शं प्रकटीकृतयथार्थधर्मस्वरूपं दुर्जनशासनकर्तव्यबोधकं 'शीखगुरुचरितामृतं' भवद्भ्य उपहारीकुर्वतो मे मन आनन्दसागराधस्तलमवगाहते. बान्धवाः! पूर्वदुरितसंचयेन वा परस्परद्वेषविषेण वा परमेश्वरेच्छया वा न जानेऽन्येन केनापि कारणेन वेदृशीं दुरवस्थां प्राप्तानस्मान्सर्वेऽपि सकलधरणितलवासिनो हीनान् दीनांश्च मन्यन्ते. व्यपदिशन्ति च तादृशदैन्यस्य कारणं परममान्यैर्ब्रह्मर्षिभिस्तथा राजर्षिभिश्च सर्वदा स्वीकृतां सात्विकीं वृत्तिं. निदर्शयन्ति च तादृशं दृष्टान्तमजापुत्रस्य. अस्मदीया अपि केचन परकीयैश्वर्यदर्शनमोहितान्तःकरणवृत्तयस्तत्सर्वं सत्यं मन्यन्ते. तेन साधारणा जना राजसीं वृत्तिं श्रेयस्करीं मन्वते. अस्य भ्रमस्य निरासार्थं मया लिखितोऽयं प्रबंधः. सज्जनाः! सर्वेऽप्येते सात्विकतामसवृत्त्योर्भेदमजानन्त एवं वदन्ति. अजापुत्रस्य वृत्तिः सात्विकी न किंतु तामसी. सा च जडरूपा. सात्विकी वृत्तिः सामान्यतो ज्ञानरूपाऽलौकिकशक्तिशालिनी. राजसी च केवलं स्वेन्द्रियतृप्तिफला परपीडाकरी च. सा च सात्विकी वृत्तिरुग्ररूपया राजस्या वृत्याऽभिहता क्षणमात्रं राजसं रूपं धृत्वा तां राजसीं

प्रवृत्तिं समूलं नाशयति. यथैव श्रीगुरुराजनानकदेवमारभ्य गुरुरामदासपर्यन्तं क्रमेण वर्धमाना गुरुभक्तिमयी सात्विकी वृत्तिः प्रबलया दिल्लीश्वरस्य राजस्या वृत्याऽभिहता प्रक्षुब्धा गुरुमर्जुनसिंहमारभ्य गुरुगोविन्दसिंहपर्यन्तं राजसं रूपं धृत्वा तन्नाशाय प्रायतत. क्रमेण यशस्विनी बभूव च. पाठकाः! इदं सर्वं चरितामृतं यः सूक्ष्मया दृष्ट्याऽवलोकयेत्सोऽवश्य-मेव "नेदं मानवानां चरितं किंतु सात्विकबलसामर्थ्यस्य" इति वदेत्. बान्धवाः? क्षणिकवैषयिकसुखलोभेन महता प्रय-त्नेन नः पूर्वजैः सम्पादितां सात्विकीं वृत्तिं मा परित्यजत. इयमेव सम्यक् रक्षिता परकीयराजसवृत्त्या प्रतिहता क्षणं परं रूपं गृहीत्वा युष्मानैहिकेन फलेन संयोजयन्ती पारमार्थिकमपि फलं युष्मभ्यं दद्यात्. तत्सावधाना भूत्वा धैर्यमवलंब्येयं सेव-नीया. चित्तस्थैर्यार्थमीदृशानि प्राचीनानां सात्विकानां पूर्वजानां चरितानि पठनीयानि. परमात्मा युष्मान् स्थिरसत्ववृत्तीन सर्वदा दीनकल्याणदक्षान् सुखिनो विदधातु.

इन्दूर.
२१-१२-१९३३

विद्वदनुचरः
**श्रीपादशास्त्री.**

# विषयानुक्रमः









# ( उपोद्घातः )

१ पंजाबदेशवर्णनम्.
२ निवासिजनेतिवृत्तम्.
३ महंमदीयानामाक्रमणानि.
४ कलहाः, आर्यधर्मस्य दुर्दशा.

( १ )



अस्ति समस्ते भारते वर्षे विख्यातः, असंख्यपर्वतावलीनिगडितः, सकलपवित्रमहानदीप्रवेशपवित्रः, शूरधार्मिकजनसंकुलः, नदीमातृकतया दौर्भिक्ष्यनाम्नाऽपि विहीनः, विविधधान्योत्पादनसमर्थकृषितया संपन्नकृषीवलगणः, स्थाने स्थाने साक्षात्कृतपरमतत्वैर्विद्याविलासमग्नैर्महानुभावैः प्राचीनमुनिभिः कृतप्रतिष्ठैः पवित्रैस्तीर्थैः समाकुलः, निसर्गत एवालौकिकसौन्दर्यया वनश्रिया भूषितः, पंजाबनाम्ना सम्प्रति व्यवह्रियमाण आर्यावर्तस्योत्तरः प्रदेशः.

यत्र च सिन्धुगंगायमुनासतलजचिनाबसंज्ञकाः पंच महानद्यः परिवहन्त्यः स्वजलौघेन सकलमपि तदीयं भूमिप्रदेशं सुसंपन्नं

सुखिनं कुर्वन्त्यस्तस्यास्योत्तरार्यावर्तस्य 'पंजाब' नामविधाने साहाय्यमकुर्वन्.

यस्य चोत्तरेण वर्तमानः, सततनिपातिहिमानीसमाच्छादितैर्लतावृक्षनाम्नाऽपि विहीनैरतिकोमलरविकिरणप्रकाशितै रजतमयैरिव शिखरैर्गगनं विदारयन्निव स्वर्गगमनमार्गालंकृतइव विराजमानः, साहसिकैरपि दुरारोहः, निसर्गसुन्दरस्यास्यार्यावर्तस्य रक्षणाय भगवता निर्मितइवापारखनिमण्डितः, सुरनिवासयोग्यो हिमालयः; दक्षिणेन—सोऽयमतिविख्यातः क्षत्रियजन्मभूमिरिव वीरमयः शीलरक्षणतत्परललनाभूषितोऽनेकैः श्रीप्रतापसिंहप्रभृतिभिः क्षत्रियश्रेष्ठैर्भूपालैः परिपालितो राजपुतानेत्यपरनामधेयो राजस्थाननामा महान् प्रदेशः; पश्चिमेन—हिमालयसहोदर इव हिन्दुकुशनामाऽपरः पर्वतः; पूर्वेण—बौद्धमतानुयायिसंकुलस्तिबेटनामा पर्वतमयो भूप्रदेशः शोभते.

यस्मिंश्च बदरिकाश्रमप्रभृतीनि सकलसनातनधर्मानुयायिवन्दितानि शुद्धसात्त्विकचित्तवृत्त्युदययोग्यानि तपस्यास्थानानि, गंगोत्रीजमुनोत्रीप्रभृतीनि अलौकिकसृष्टिसौन्दर्यमण्डितानि प्रबलशीततया मानवनिवासानर्हाणि महानदीप्रभवस्थानानि, केदारप्रमुखानि वैराग्यजनकानि तीर्थस्थानानि, ज्वालामुखीमुखान्याश्चर्यस्थानानि द्रष्टा विलोक्य सुतरां विस्मित ईश्वरध्यानप्रवणो भवत्येव.

किंच—यं सकलपृथ्वीतलनिवासिजनदर्शनार्हः, अतिविरलरविकिरणसंतापप्रशमितप्रबलहिमानीशीतः, परितोविराजमानहिममयपर्वतावलीपरिवेष्टितः, अत्युन्नतशिखराग्रप्रवृद्धघासभ-

क्षगततपरच्छागसंहतिसुन्दरः, अतिविस्तीर्णसतलजप्रवाहभासुर-शालीक्षेत्रदर्शनीयः, विशालहरितपल्लवमंडितवृक्षगणारूढपुष्पगु-च्छालंकृतलताजातनिकुंजमनोहरः, केसरसुरभिगन्धपरिपूरित-दशदिशः, स्थाने स्थाने निर्निद्रकमलराजिभूषितैरगाधजलैः सरोवरैरञ्चितः, विविधगदनाशकजलैः सततप्रवाहिभिर्निर्झरैश्च विख्यातः, महार्घपट्टवस्त्रोत्पादनचणः, अनेककुल्याप्रवाहार्द्रीभूत-लस्वर्ग इव सर्वेषामपि स्पृहणीयः, भारतभुवो विश्रान्तिस्थानमिव, सकलदेवगणविलासार्हो मुकुट इवार्यावर्तस्य काश्मीरनामा महान् प्रदेशोऽधुनाऽपि भूषयति.

अपि च-सकलभारतवर्षविख्याताः, अनेकवीरपरित्यक्तकले-वराः, भारतवर्षेतिहासस्य मातर इव सन्मान्याः कुरुक्षेत्रप्रभृतयो रणभूमयः समलंकुर्वन्ति.

यस्मिंश्च-भगवतो रावणारे रामचन्द्रस्य पुत्रेण लहुना स्थापिता लाहोरनगरी, प्रबलशौर्यशीखधर्मानुयायिभिः स्थापि-ताऽमृतसरनगरी, तथा विविधभारतभूपालैरधिष्ठिताऽगणिताश्व-मेधपरिपूता 'इंद्रप्रस्थ' इति प्राचीननामधेया 'दिल्ली' इति-नूतनाभिधाना नगरी च पथिकजनैर्वीक्षिता अवश्यं भारतवर्षस्य पूर्ववृत्तान्तं स्मारयन्ति.

( २ )

तस्मिन्नस्मिन्सुखकारिणि प्रदेशे आर्याणामागमनात्पूर्वं विभिन्नाचारा अनार्यजातयस्तत्रासन्निति आधुनिका इतिहासविदो वदन्ति. इदं च तेषां मतं युक्तमिति भाति. कथमन्यथा सम्प्रत्यपि हिमालयोपत्यकायां विरलवाससोऽज्ञानमया अजापालनप्रधान-

व्यवसाया अनार्यजातयः समुपलभ्यन्ते? अस्तु. अनार्याणां समयेऽयं प्रदेशः केवलं क्वचिद्दृश्यमानग्रामटिकः, सर्वत्र महारण्यव्यापृतः, क्रूराणां व्याघ्रादीनां निवास एवासीत्. ते चानार्याः अल्पसंतोषशीला यथाकथंचिद्भूमिं संस्कृत्य जीवनपर्याप्तमन्नं लब्ध्वा कृतकृत्या अधिकधनसंपादनाय नाचेष्टन्त. एते च स्थूलानि वस्त्राणि शरीराच्छादनाय व्यरचयन्, परन्तु प्राधान्येन मृगयानिहतानां वन्यपशूनां चर्मभिरेव स्वशरीरं शीतातपाभ्यामरक्षन्.

अथोत्तरध्रुवनिवासिनो बुद्धिमन्तो जनाः स्वदेशे शीताधिक्येन स्थातुमशक्नुवानाः स्वजन्मभूमिं विहाय सर्वत्र पृथ्वीतले पर्यटन्. केचन युरोपखण्डं गत्वा तत्रैव न्यवसन्. केचनान्यत्र. तेष्वेव केचनेमां भूमिं समशीतोष्णां निशम्य क्रमशो नानानदीस्तथा पर्वतावलीश्चोल्लंघ्य हिमालयस्य परस्ताद्वर्तमानं देशमागत्य स्वनिवासमकल्पयन्. तत्र च क्लृप्तनिवासा भारतभुवं प्रविविक्षवो हिमालयपर्वतोल्लंघनाय मार्गमशोधयन्. ते च निसर्गतस्तथा दीर्घप्रवासेन लब्धज्ञाना बुद्धिमन्तोऽपि न चिरादपि मार्गमलभन्त.

अथ केचन साहसिका ग्रीष्मसमये प्रखररविसंतापेन विरलीकृतहिमैर्हिमालयदरीमार्गैः कथमपि कृतप्रवेशा इमां भारतभुवमागच्छन्. इमां सर्वर्तुषु सुखकारिणीं निवासार्हामवलोक्य सन्तुष्टास्ते सर्वानपि स्वकीयानाहूयात्रैव न्यवसन्. क्रमेण वर्धमानास्ते पूर्ववासिनो जनानजयन्. ते च हिमालयं दुर्लंघ्यं मन्यमानास्तमुल्लंघ्याकस्मात्समागतांस्तान्नूतनाञ्जनानवेक्ष्य विस्मितास्तान् देवसंभवानमन्यन्त. तेन यदा यदा तैः समं संग्रामा अजायन्त तदा भीतास्ते लीलयैव पराजीयन्त. ततश्च क्रमेण

तान्विजयमानास्ते सर्वेऽपि लोका गंगायमुनयोर्मध्यमाक्रम्यान्ते नर्मदां स्वमर्यादां चक्रुः. ते च विजयमाना अपारैश्वर्यसम्पन्ना आत्मानमार्यशब्देन व्यपादिशन्. जितांश्चानार्यशब्देन.

एवं कियति काले प्रयाते ते सर्वेऽपि आर्या आर्यावर्त-वासीन्यरण्यानि च्छित्वा तत्र नूतनानि नगराण्यवासयन्. कृषिसौकर्यार्थं महतो नदीजलौघान् प्रत्यावर्त्य तेषां जलैः सर्वं देशं नदीमातृकं चक्रुः. अज्ञातकालादसंस्कृतामिमां भुवं सम्यक् संस्कृत्य तस्याः सकाशान्नानाविधान्यन्नानि समुदपादयन्. यद्यपि बाहुल्येनैतैरार्यैर्जिता अनार्याः क्रमेण तं देशं त्यक्त्वा दक्षिण-भारतमगच्छन्. केचन विंध्याद्रौ स्वनिवासमकल्पयन्. तथापि असंख्या अनार्यास्तेषामार्याणां सेवावृत्तिं स्वीकृत्य तत्रैव न्यवसन्. तांश्च ते दासनाम्ना व्यवजह्रुः.

यदा च भारतभुवं प्रविष्टा आर्यास्तदा तेषु कार्याभावादेव चातुर्वर्ण्यकल्पना नासीत्, परन्तु यदा ते भारतभुवं विजित्यास्या भुवः स्वामिनः संवृत्तास्तदा विविधकार्यसौकर्याय स्वीयानामेव मध्ये गुणतारतम्येन विभागमकल्पयन्. ते च बुद्धिमन्तः सात्विकीं प्रकृतिं वीक्ष्य स्वीयानेव कांश्चिद्विद्यावर्धनाय, बलिष्ठान् रजोगुणशालिनो जनरक्षणाय, व्यवहारकुशलांल्लोभमयान् धन-संपादनाय न्ययुंजन्. दासांश्चैषां त्रयाणां विभागानां सेवाधिकारे. एवं व्यवस्थाप्य ते आर्याः स्वस्वकार्याणि कुर्वाणा यथेच्छं मृत्युलोकसुखानि समपादयन्.

वाचकाः ! इमे आर्या यदा सम्पन्नां भारतभुवं जित्वा ततोऽगणितानि धान्यानि तथा खनिभ्यो विविधान् धातून्

बहिराहरंस्तदा तेषां व्यवहारः परकीयैः समं बभूव. यदा च व्यवहारः परमवर्धत तदा तद्रक्षणार्थं सैन्यमपि तैर्निर्मितम्. ततश्च व्यवहारवर्धनार्थं तज्ज्ञा अपि यदाऽपेक्षितास्तदाऽयं ब्राह्मणवर्गोऽपि प्रादुर्बभूव. सज्जनाः? यदेमे सर्वेऽपि वर्गाः स्वस्वकार्याणि सोत्साहमैकमत्येनाकुर्वंस्तदा यत् खलु सम्प्रति अस्माकमितिवृत्तं समुपलभ्यते तत्तदैव प्रादुर्भूतम्. कुशला बुद्धिमन्तो वैश्या परकीयैः समं नानाव्यवहारान्विधायागणितां सम्पदं स्वदेशमानयन्. तैः संपादिताभिः संपद्भिरियं कृत्स्नापि भारतभूमिर्विशेषतश्चार्यावर्तं कुबेरनगरीमपि तिरश्चक्रे. दासैः परिपालिता गावो नानाविधानि कृष्युपयोगीनि द्रव्याणि व्यतरन्. दधिघृतादिकं यथेच्छं भक्षयंतः क्षत्रिया अपि बलाढ्याः परकीयेभ्यः स्वदेशं सम्यगरक्षन्.

एवं वैश्यैः कृतेन धनदानेन संसारचिन्ताविहीनाः क्षत्रियैः सम्यग्विहितरक्षा अलौकिकबुद्धिप्रभावाः सात्विका आर्या रात्रिंदिवं विविधनिगूढशक्त्याविष्कारे सक्ता अलौकिकान् ग्रंथान् व्यधुः. सज्जनाः? ये खलु अद्यावधि अस्मिन् भारतवर्षे विभिन्ना धर्मसंप्रदाया दृश्यन्ते तेषां बीजमेभिरेव संपादितम्. यः कोऽपि नूतनो धर्म आविर्भवतु स एतेषां विचारान्नातिक्रामति. तैश्च ब्राह्मणैः प्रथमत एव राज्यशासननियमप्रधानान् नीतिशिक्षणग्रंथान्निर्माय राज्यमर्यादा तथा जनमर्यादा च सम्यक् परिपालिता. ततश्चानया वृत्या वर्तमानैर्लब्धे च निरतिशये स्वास्थ्ये ते च सात्विका मुनयः क्रमेण लौकिकविषयेभ्यः स्वबुद्धिं निवर्तयन्तोऽलौकिकतत्वशोधने तामयोजयन्.

अचिरादेव जगदुत्पत्तिस्थितिलयकारणं तथा स्वात्मस्वरूपं तथा मोक्षस्वरूपं ज्ञात्वा तदनुभवान् ग्रंथरूपेण प्रकाशयामासुः. तानेव ग्रंथान् वयं सम्प्रति उपनिषदो दर्शनानीत्यादिशब्दैर्व्यपदिशामः.

सज्जनाः! ते हि मुनयः केवलं तदनादि तत्वं विदित्वैव नात्मानं धन्यममन्यन्त, किंतु तल्लाभाय नानोपायानपि स्वमतिप्रभावेणाकल्पयन्. तेषु सर्वेष्वपि सन्मान्य उपासनामार्ग एवासीत्तस्य सिध्यर्थं ते नानापवित्रस्थलेषु हिमानीसमाच्छादितेषु निर्विकारचित्तवृत्तिविधानक्षमेषु बदरिकाश्रमप्रभृतिषु स्थलेषु स्थाने स्थाने देवालयानि निर्माय सर्वानपि जनानीश्वरप्राप्ति-मार्गमुपादिशन्.

एवंगते कियति काले ते सर्वेऽपि आर्याः परस्परं प्रेम्णा वर्तमानाः सुखेन कालमयापयन्. समये समये च दुष्टा जना अजायन्त परन्तु तेषां शासनाय बलिष्ठाः क्षत्रिया अप्याविरभवंस्तेन दूरीकृतत्रासास्ते मुनयस्तान् भगवदवतारानेवामन्यन्त. अस्तु.

अथ महता कालेन सूर्यकुले भगवान् दाशरथिः प्रादुर्भूय दुर्वृत्तं रावणं जघान. तस्मिन्नपि भूभारमवतीर्य स्वावासं प्रयाते तदीयः कनिष्ठः पुत्रस्ततो निर्गत्यास्मिन्नुत्तरार्यावर्ते नूतनमेव नगरं लहुकूटेतिपूर्वनामधेयं लाहोरेत्याधुनिकाख्यं निर्माय तत्र कृतवसतिः समग्रं तं प्रदेशं पालयामास. सम्प्रति ये खलु शिखसंज्ञका जना अस्मिन् देशे प्राधान्येनोपलभ्यन्ते ते सर्वेऽपि प्राधान्येन क्षत्रियवंशजा एव. यद्यप्यधुना तेषु जातिभेदादिकं नास्ति तथापि तेषां पूर्वजानां सूक्ष्मया दृशा वृत्तान्तान्वालोचनेऽवश्यं ते क्षत्रियवंशजा एवेति सिध्येत्.

सज्जनाः! आस्तामयं वाद एतावानेवात्र, अग्रे च प्रसंगत एनं सम्यगुपपादयिष्यामि.

( ३ )

यथा हि केचनार्या हिमालयं समुल्लंघ्येमां भारतभुवमागतास्तथैव केचनार्या अरबस्थाननामके वालुकामये प्रदेशे न्यवसन. यद्यपि ते बुद्धिमन्तः परमासन् परन्तु निसर्गादत्तहस्तावलंबास्ते भारतवासिनामार्याणां सदृशीं स्वोन्नतिं विधातुं नाशकन्. यतः स प्रदेशः सदैव प्रखररविकिरणसंतापसंतापितो दुर्लभजल उदरपर्याप्तमन्नमपि दातुमसमर्थ आसीत्. तेन तत्रत्या आर्यजना यथाकथंचित्स्वोदरपूरणार्थमेव प्रायतन्त. तेन न ते स्वाज्ञानं दूरीकर्तुं प्राभवन्. अज्ञानेन यत्किंचित्परिकल्प्य तदनंगीकारे शिरश्छेदं कुर्वन्तस्ते सर्वमपि प्रदेशं व्याकुलमकार्षुः. क्षुद्रमपि कारणं लब्ध्वा परस्परं कलहायमानाः प्रतिदिनं शोणितसरितः प्रावाहयन्. भारतवासिनां च ते वार्तामपि नाजानन्.

एवं प्रयाते काले तेषु महंमदो नाम बुद्धिमान्हिताहितावलोकनचतुरो नूतनमेव धर्मं निर्माय तमनंगीकुर्वतां जनानां नाशाय सर्वानुपदिदेश. ते च प्रथमतस्तमेव महंमदं निरतिशयमपीडयन्, परन्तु कालवशात्तद्विरोधं त्यक्त्वा तस्यानुयायिन एवाभवन्. अयं च महंमदः स्वस्वेच्छयोपासनार्थं स्थापिता देवतामूर्तीः कलहकारणत्वेन विज्ञाय तां मूर्तिपूजामेव निषिषेध. तत्कारिणश्च 'काफर' पदेन व्यपदिशंस्तेषां हननाय स्वानुयायिन आदिदेश. सर्वत्र नानाचारभेदप्ररूढं जातिभेदं तन्मूलकं च परस्परद्वेषं विनाशयितुमिच्छुः स महंमद ईश्वरोपासनार्थं मंदिराणि

विरचयामास. तेषु सर्वैरपि स्वानुयायिभिः समं नियते समये स ईश्वरमुपास्त.

अनेन सुलभोपायेन विनष्टपरस्परभेदद्वेषास्ते सर्वेऽपि जनाः स्वकीयान् सर्वानपि स्वबन्धून् मन्यमानास्तस्य महंमदस्य शत्रुं स्वशत्रुममन्यन्त. एवं स्वीयेष्वेव परस्परं द्वेषं दूरीकृत्य तस्य नूतनधर्मस्य प्रसाराय तानेव स्वानुयायिन आदिदेश. अशाच्च तेभ्यः-मानवस्य देहसार्थक्यमस्य धर्मस्यानुसरणेन तथा प्रसारेण च भवति. योहीमं धर्मं नांगीकरोति स मूढः स्वयं नष्टः परानपि नाशयतीति हन्तव्य एव. ये केचनैतस्य धर्मस्य कृते समरे पतिष्यन्ति ते निःसंशयं स्वर्गलोकं प्रयान्ति. ईश्वरस्तान् स्वयमनुगृण्हाति. यो हि मदीयधर्मानुयायी भूत्वा तस्य प्रसारार्थं न यतते सोऽपि नरकलोकं यातीति.

अनेन तस्योपदेशेन ते सर्वेऽपि अरबस्थानवासिनः परकीयानाक्राम्य तान् बलादेव स्वानुयायिनो व्यधुः. अनंगीकुर्वतां च जनानां शिरांसि चिच्छिदुः. सम्पदश्च तदंगनाभिः सममहरन्. तेन लौकिकसुखमपि प्रभूतं प्राप्नुवन्. तेषां च व्यवहारेऽपि सौख्यं वीक्ष्यान्येऽपि जना अनेन धर्मप्रसारमिषेण परकीयानाक्रम्य यथेच्छं तत्संपद आहृत्य सौख्यान्यन्वभूवन्.

अनेन क्रमेण वर्धमानो महंमदीयधर्मानुयायिनां समूहः शीघ्रमेव प्रलयकालजलधिवत् दुर्निवार्यो बभूव. स च प्रथमतो हिमालयेन प्रतिबद्धो युरोपखंडे प्रससार. अतिवेगेन प्रसारशीलमिदं मतं सर्वं भूतलमाचक्राम. अस्य धर्मस्याद्ये स्थापके महंमदे परलोकं गतेऽपि तदनुयायिनः क्रमेण सर्वत्र स्वधर्मं प्रासारयन्.

तदानीं चास्मिन्नार्यावर्ते सर्वेऽपि आर्याश्चातुर्वर्ण्यं सम्यग्व्यवस्थाप्य सुखेनाजीवन्. स्थाने स्थाने राजधानीनगराणि स्थापयित्वा बलिष्ठाः क्षत्रियराजाः प्रजा न्यायेनापालयन्. अस्मिन् समयेऽतिकठिनैर्हिमालयदरीमार्गैर्ग्रीष्मकाले तनूभूते हिमे साहसिका महंमदीयधर्मानुयायिनोऽश्वानां तथा मुक्तादीनां व्यवहारानकुर्वन्. सर्वेऽप्यार्याः सुखसंपन्नास्तेभ्यस्तानुत्तमानश्वानक्रीणन्. इतश्च कौशेयवस्त्राणि गृहीत्वा परदेशे ते व्यक्रीणन्. एवंक्रमेण हिमालयदरीमार्गैस्ते यवना आयव्ययव्यवहारं चिराच्चक्रुः.

एवं व्यतीते महति काले ते महंमदीया अन्यं देशमनाक्रम्यास्वस्थचित्ताः हिमालयमुलंघ्यार्यावर्तं प्रवेष्टुं प्रायतन्त.

ते चैवं प्रयतमाना अपि अयशस्विनः प्रथमतः सिंधुनदस्य तटेन प्रवसन्तः सिंधनामानं महादेशमागच्छन्. तस्मिन् समये तत्र दाहीरनामा क्षत्रियवंश्य एव भूपालो राज्यमकरोत्. ते च तं राजानमाक्रम्य तदीये कन्ये बन्दीकृत्य स्वदेशमगच्छन्. दीनो दाहीरस्तु समरभूमावेव प्राणानजहात्. ततश्च महति समये व्यतीते पुनरपि महंमदीयाः सहसा नागच्छन्. ते च स्वदेश एव स्वबान्धवैः समं कलहायांचक्रिरे. तेषु कश्चन साहसिको हिमालयान्नातिदूरे 'गिझनी' नाम्नि नगरे नूतनमेव राज्यं स्थापयामास. तस्य राज्यस्य सीमोत्तरार्यावर्तसंबद्धैवासीत्. तस्मिन् समये पंजाबनाम्नि उत्तरार्यावर्ते जयपालो नाम बलाढ्यः क्षत्रियराज एव राज्यमकरोत्. स तु साहसिको गिझनीपतिः सबक्तगीननामानं स्वदासं स्वजामातरं विधाय तं सिंहासनाधिष्ठितमकरोत्.

तदानींतना आर्यावर्ते भिन्नभिन्नराज्यानां प्रशासकाः क्षत्रियराजाः स्वसीमायां इदं नूतनमेव महंमदीयानां राज्यं विलोक्य शंकाकुलाः सिंधप्रदेशे कृतैरत्याचारैस्तेषां स्वभावमपि सम्यक् जानन्तः स्वधर्मद्वेषमपि तदीयं मनसि कुर्वन्तस्तस्य राज्यस्य बाल्य एव नाशः श्रेयस्कर इति मन्यमाना उत्तरार्यावर्ताधीश्वरं जयपालमग्रेकृत्वा सर्वेऽपि ससैन्यं तस्य नाशाय सिन्धुनदमवतीर्य तदीयं राज्यं प्राविशन्. सोऽपि संघीभूतांस्तानवलोक्य चिन्तातुरो महता सावधानेन स्वसैन्येन प्रतिरुरोध. संवृत्ते युद्धप्रसंगे पराजिताअपि ते क्षत्रियराजाः स्वसैनिकैः समं पुनरपि स्वदेशं प्रत्यागच्छन्. जयपालश्च तस्मै गिझनीपतये नियतं करद्रव्यं दातुमंगीचक्रे.

राजा जयपालः प्रत्यागतस्तेन पराभवेण नितरां लज्जितः पुनरपि स्वसेनां व्यवस्थाप्य करद्रव्यं न प्रैषयत्. तेन क्रुद्धः स गिझनीपतिर्महता सैन्येन समं हिमालयदरीमार्गैरकस्मादेवोत्तरार्यावर्तं प्रविवेश. सावधानो जयपालोऽपि क्षत्रियराजसहायस्तेन समं शौर्येणायुध्यत, परन्तु भारतवर्षस्य दुर्दैवेन न व्यजयत. इत्थं गिझनीपतिस्तं पराजित्य प्रसिद्धे हिमालयदरीमार्गे ‘खैबरघाट’नाम्नि दशसहस्रसैनिकसेनां निधाय स्वदेशमगात्. वाचकाः! अस्मिन् भारतवर्षेऽग्रे महंमदीयधर्मानुयायिनां यानि महान्ति राज्यान्यभवंस्तेषामिदमेव मूलमिति सर्वेषामपीतिहासविदो मतम्. अस्तु.

परलोकं गते तस्मिन् सबक्तगीने तदीयो दासीपुत्रो महंमदो ज्येष्ठं बन्धुं बन्दिनं विधाय स्वयं राज्याधीशोऽभवत्.

सज्जनाः ! अयमेव प्रधानो भारतवर्षस्य लुण्ठको महंमदीयः. अनेनैवेयं भारतभूः सप्तदशकृत्वो निर्लुण्ठिता. अगणिता देवालया भूमिसात्कृताः. असंख्या आर्यमहिला दासीकृताः. अस्तु.

यदा चायं सिंहासनाधीश्वरो बभूव तदा स्वानुयायिनः प्रति भारताक्रमणाय परं प्रोत्साहयामास. तेऽपि च दारिद्र्यपीडिता अनेन प्रसंगेन संपल्लाभं महान्तं तर्कयन्तः सहसाऽनु कूला अभवन्. तांश्चानुकूलान्विधाय तैः समं स महंमदो महता जवेन तेनैव मार्गेण पुनरपि उत्तरार्यावर्तं समाजगाम. तस्मिन् समये स एव जयपालोऽन्यैः क्षत्रियराजैः समं तं पराजेतुमुद्यतो बभूव. प्रवृत्ते च युद्धे क्रूराणां तेषामाक्रमणानि सोढुमशक्ताः सर्वेऽपि क्षत्रियाः पराजीयन्त. विजयी महंमद उत्तरार्यावर्तं निर्लुण्ठ्यागणितां सम्पदं स्वदेशं निन्ये.

राजा जयपाल एभिः सततं प्राप्तैः पराजयैर्दुःखाकुल आत्मानमेव पापिनं मन्यमानः स्वपुत्रं राज्याधिकारिणं विधाय स्वयमात्मशुद्ध्येऽग्निकाष्ठानि भक्षयामास.

एवंक्रमेणोत्तरोत्तरमाधिक्येन सर्वमप्यार्यावर्तं निर्लुण्ठ्य दीनं चक्रे महंमदः.

सज्जनाः! अयमेव महंमद इमं पंजाबप्रदेशं विजित्य स्वराज्यान्तर्गतं चक्रे. तत एव चार्यावर्ते बद्धमूलाः सर्वेऽप्यग्रिमा महंमदीयधर्मानुयायिनो राजानः क्रमेण समग्रं भारतवर्षमजयन्.

एवंगते कियति कालेऽग्रिमा महंमदीयाः क्रमेण स्वहस्तपादमग्रे प्रसार्य स्वराजधानीं दिल्लीनगरं चक्रुः. दुर्दैवाक्रान्ताश्च क्षत्रियाः केचन राजस्थानं प्रविश्य दुर्गमेषु अरवलीप्रभृतिषु

पर्वतेषु निवसन्तः पूर्वनिवासिभिरनार्यैः समं कलहायमाना विजयीभूय नूतनानि राज्यानि स्थापयामासुः. अन्ये च महंमदीयान् दूरतः परिहर्तुमिच्छन्तो नर्मदामवतीर्य दक्षिणापथं प्रविष्टास्तत्रैव नूतनानि राज्यानि निर्माय सुखेनावसन्.

आर्यावर्तेऽपि यथा यथा महंमदीयानां योगक्षेमार्थं समागतानां संख्याऽवर्धत तथा तथा तेषामपि मध्ये परस्परं कलहा अजायन्त. नानाविधा महंमदीयधर्मानुयायिनां वंशा अत्रागता लोभाकुला युध्यमानाः परस्परमघ्नन्. तस्मिन्नस्मिन्कलहे भारतमाता सुन्दोपसुन्दयोर्मध्ये स्थितां मोहिनीमनुचकार. प्रजाश्च समये समये विजयिभिर्नूतनैर्भूपैराक्रान्ताः स्वत्राणांस्तथा स्वसम्पदं क्षणभंगुराममन्यन्त.

एवमपि व्यतीते बहुकाले विभिन्नेषु महंमदीयेषु आर्यावर्तमाक्रम्य निर्लुण्ठत्सु सत्सु खिलजीकुलसंभवोऽल्लाउद्दीनो दक्षिणापथस्थानि क्षत्रियाणां राज्यानि समृद्धानि निशम्य तान्यात्मसात्कर्तुं नर्मदामुत्तीर्य प्रययौ. क्रमेण देवगिरिनाथं विजित्य रामेश्वरपर्यन्तं सकलमपि दक्षिणापथं शोकविह्वलमकरोत्.

वाचकाः ! न वयमिदं महंमदीयाक्रमणानामितिवृत्तं लिखितुं प्रवृत्ताः, किंतु अस्मच्चरितनायककालपूर्वं भारतवर्षस्य स्थितिः कीदृश्यासीदिति बोधनाय महंमदीयाक्रमणस्वरूपं दर्शयितुं. अस्तु. यदा चायं वैभवशाल्यल्लाउद्दीनो दक्षिणापथमप्याचक्राम तदाप्रभृत्येवेदं भारतवर्षं सर्वैरार्यैः समं पारतंत्र्यमग्नमद्यापि आस्ते.

( ४ )

एवंस्थिते ये खलु महंमदीया अत्र समागतास्तेषां विभिन्नाचारविचारत्वेन तैः सममार्यधर्मानुयायिनां स्नेहो नाभवत्. बलिष्ठाश्च राजपक्षीया दीनानार्यान् स्वदासान् मन्यमाना यथेच्छं तानपीडयन्. राजा च स्वविरुद्धधर्मानुयायिनस्तान् स्वशत्रून् मन्यमानो न तेषां दुःखानि परिजहार, प्रत्युत तान् महंमदीयधर्मस्यानंगीकारान्नूतनेन दण्डेनेव करेण योजयामास. एवंविधाभिरापद्भिः सकला आर्यधर्मानुयायिनः परं दुःखाकुला अभवन्.

वाचकाः ! भारतवर्षवासिन आर्या यद्यपि अत्रागमनात्पूर्वं न तावत्सदाचारा आसन्, परन्तु आर्यावर्तं प्रविश्य लब्धस्वास्थ्यास्ते विचारशीला विद्यावृध्या परमोदारा अभवन्. स्थाने स्थानेऽतिसुन्दराणि देवालयानि विधाय स्वाभिमतानां देवतानामुपासनामकुर्वन्. अतिशीतलेऽपि गंगादीनामुद्गमस्थले निभृतं तपस्यन्तस्तेऽलौकिकीं मनःप्रसादसंपदमलभन्त. एवमुपासनानिमग्नास्ते व्यवहारे उदासीना एवाभवन्. नूतनमागता महंमदीयाः संस्कृत्या विहीना अपि शारीरबलेन सम्पन्नास्तानजयन्. शारीरबलेन तान्विजित्य धर्मेणाऽपि जेतुकामा बलादेव तान् स्वधर्मानुयायिनो विधातुं प्रायतन्त. परंतु आर्याणां धर्मकल्पना ततोऽपि अतिश्रेयसी न तान् यशस्विनो व्यधात्. धर्मप्रसारे पराजितमात्मानं मन्यमानास्ते महंमदीयराजा आर्याणां धर्मस्य नाशाय तेषां तीर्थानि दूषयामासुः. देवालयानि च क्षितिसात्कृत्वा देवताप्रतिकृतीः शकलीकृत्य तानि शकलानि

स्वोपासनामंदिराणां सोपानपंक्तिषु निवेशयामासुः. आर्याणां परमवन्दनीया गा हत्वा तद्रुधिरैर्देवालयानि सिषिचुः. किंबहुना यदाऽयं महंमदः सोमनाथं तथा मथुराक्षेत्रमाचक्राम तदाऽसंख्यानि देवालयानि नामशेषाण्यकरोत्. व्यभिनच्च महादेवलिंगं. अल्लाउद्दीनोऽपि रामेश्वरक्षेत्रे किमपि महद्देवालयं विनाश्य तस्य स्थाने स्वधर्मस्योपासनामंदिरं बबन्ध.

सज्जनाः ! ईदृशो विपद आर्यधर्मानुयायिनामुपरि अनिशमापतन्. दक्षिणार्यावर्ते तथा दक्षिणापथे ये आर्यधर्मानुयायिनो न्यवसंस्तेषां महंमदीयधर्मानुयायिनां जन्मस्थानादतिदूरत्वेन न ते तादृशं दुःखमलभन्त यादृशमुत्तरार्यावर्तवासिनः. उत्तरार्यावर्तस्य च सामीप्येन प्रतिदिनमगणिता महंमदीयास्तत्रागत्य कलहायमानास्तान्निरतिशयमपीडयन्. तत्रापि कृतनिवसतयः स्थायिन एवाभवन्. साधारणेऽपि व्यवहारे ते तानार्यधर्मानुयायिनः परमत्रासयन्. तेन परं दुःखाकुलास्ते सनातनधर्मानुयायिनस्तं देशं विहायाऽन्यत्रागच्छन्. अन्ये च तदनुरोधेन वर्तमानाः कथमपि स्वजीवनयात्रामयापयन्.

किंच—महंमदीयाः स्वधर्मप्रसारे ब्राह्मणान् प्रतिबन्धकान् मन्यमानाः प्रायो ज्ञानहीनेष्वेव जनेषु स्वधर्मं प्रसार्य तान् स्वानुयायिनो विधाय तानेव राजकीयपदेषु न्ययुंजन्. ते चाज्ञानिनः सत्ताशालिनः स्वाज्ञानकारणं ब्राह्मणवर्गं मन्यमानास्तानेव निरतिशयं पीडयामासुः. प्रथमत एव यवनरोषास्पदीभूतास्ते दीना उदासीनाः स्वकीयैरेवैवंपीडिता अतिदुःसहानि दुःखान्याप्नुवन्. ते यवनास्तु ब्राह्मणांश्च तदीयोपासनामंदिरनाशैस्तथा

बलात्कारैश्च व्यनाशयन्. क्षत्रियांस्तु खड्गेनैव प्रथमतः. तेन ब्राह्मणक्षत्रियसाहाय्यहीनस्तेजस्व्यपि सनातनधर्मो मुमूर्षुरिवाभवत्. वैश्यवर्गस्तु धर्मचिन्तायां परमुदासीनो द्रव्यार्जनैकध्येयः स्वव्यवसायमवलंब्य कथंचिज्जिजीव.

बान्धवाः ! कस्यापि धर्मस्य संरक्षकं शक्तिद्वयमेव. तच्च वर्धकपालकभेदेन भिन्नं. बुद्धिमन्तो हि जना मिलित्वा कमपि नियमं विधाय तस्य प्रसारायोद्यता अवश्यं पालिकां शक्तिमपेक्षन्ते. पालकशक्तिविहीनाश्च ते प्रज्ञाशालिनोऽपि क्षुद्रैः शरीरबलेनाभिभूता विपन्ना भवन्ति. यदि तु पालिका शक्तिरेव स्यात्तदा तत्तत्समयानुरोधेन धर्मकल्पनायाः परिवर्तनं न स्यात्. तथासति स धर्मः स्वानुयायिनानां कल्याणकरो न भवति. सुदैवेन सनातनधर्मस्य सहायभूतमिदं शक्तिद्वितयमपि प्रथममासीत्. अलौकिकबुद्धिप्रभावशालिनो ब्राह्मणास्तस्य वर्धका आसन्. ते च प्रतिपदं नूतनैरनुभवैः परिपूर्णान् ग्रंथानुत्पाद्य सनातनधर्मस्य सनातनत्वं प्रकटीचक्रुः. विचारशीलाः क्षत्रियराजाअपि तं प्रवर्धमानं धर्मं कल्पद्रुममिवापालयन्.

अथ दुर्दैवतः पालकेषु क्षत्रियेषु विनष्टेषु सत्सु वृद्धिकारिणो ब्राम्हणाअपि क्रमेणाक्षीयन्त. तेन साहाय्याभावादयमार्यधर्मो नामशेष इवाभूत्.

वाचकाः ! महंमदीयधर्मे सनातनधर्मे चायं विशेष आसीद्यत्ते महंमदीयाः स्वधर्मप्रसारं बलात्कारेणाकुर्वन्. आर्यास्तु स्वधर्मोत्कृष्टत्वे विसंदेहा न बलात्तस्य प्रसारार्थं प्रायतन्त. यो हि विचारशीलः स्वधर्मतत्वानि ज्ञात्वा प्रीत्या स्वीकुर्यात्तमेव ते सनातनधर्मानुयायिनं चक्रुः. युक्तमप्येतत्. धर्मो हि न बला-

त्कारेण लभ्यं वस्तु. तच्च विचारैकगम्यं. एवं सत्यपि तस्य प्रसारार्थं बलात्करणं नाम शान्त्यर्थमग्निप्रवेशमनुकरोति. अद्य-पर्यन्तं ये खलु सनातनधर्मस्य शाखाभूता धर्मविशेषा अत्राजा-यन्त तेष्वेकोऽपि न बलात्कारेण स्थापितः किंतु विचारेणैव. अतएव विचारैकगम्येऽस्मिन् वस्तुनि न बलात्कारस्य प्रसरः क्रियमाणश्चोपरि सफल इव भासमानः कृत्रिम उपचारो रोग-मिव मूलभूतामधर्मबुद्धिं दृढीकरोति. एतत्सर्वं विचार्यैव महा-नुभावैर्मुनिभिर्न बलात्कारेण स्वधर्मप्रसारः कृतः. अस्तु.

एवं सत्यपि यदाप्रभृति महंमदीया आर्याणां पुरतः प्रतिवे-शिमत्वेन न्यवसन्, यदारभ्य च ब्राह्मणा नामशेषा अजायन्त तदारभ्य ब्राह्मणानामेवाभावे स्वधर्मतत्वानि ज्ञातुमशक्ता अज्ञा-निनो वैश्याः शूद्राश्च महंमदीयानामेव धर्मं समीचीनं वदन्तस्त-मेवान्वसरन्. तेषामेवाचारांस्तथा नेपथ्यविधानरीतिमगृह्णन्. तेन प्राय उत्तरार्यावर्ते सनातनधर्मस्य लोप एवाभवत्. क्वचित्क्व-चिद्विद्यमाना ये भिन्नान् भिन्नान् स्वजातिविरुद्धानपि व्यवसायान् कुर्वाणा द्विजास्तथा कृष्युपजीविनः क्षत्रिया आसन्, ते च बाह्यतः स्वीकृतयवनाचारा अपि स्वगृहेषु स्वीयानेवाचारान्ना-चरन्. यज्ञक्रियादीनां तु नामैव नाश्रूयत. संध्यावन्दनादीनां तु जना वार्तामपि नाजानन्.

एवंवृत्ते कियत्यपि काले तदीया वंशजा वयमार्या न वा! वयं सनातनधर्मानुयायिनो नवेति संदेहदोलारूढा न स्वस्वरूपं परीक्षितुमलमभवन्.

सज्जनाः! एवंवृत्ते भगवानिमं सनातनधर्मं रक्षयितुमेकं नरवरमुत्पादयामास.



# गुरुराजोनानकः

## ( पूर्वोभागः )

1 वंशवृत्तम्.
2 बाल्यं गृहस्थाश्रमः
3 वैराग्यलाभः
4 पृथ्वीपर्यटनम्.

( १ )

एवं सनातनधर्मे विपन्निमग्ने तस्योद्धारार्थं सर्वत्र नानाभक्तगणान् भगवानुत्पादयामास. तेषामेवान्यतमो गुरुराजो नानक उत्तरार्यावर्ते प्रादुर्भूय तं सनातनधर्मं ररक्ष. यद्यपि अन्यत्र समुद्भूताः साधवस्तत्तत्कालपरिस्थितिमनुसृत्य सनातनधर्मोद्धारमकुर्वंस्तथापि उत्तरार्यावर्ते यत् खलु गुरुराजनानकेनानुष्ठितं कर्म तन्निःसंशयं गौरवार्हं. अत्र कारणमपि पूर्वोक्तं विरोधबाहुल्यमेव. एवं सत्यपि यैरुत्तरार्यावर्ते सनातनधर्मो रक्षितस्तेषां गुरुराजनानकतदनुयायिनां च चरितवर्णनेनात्मानं पवित्रयामि.

अस्ति लाहोरनगरस्य समीपे तालवन्दीनामा ग्रामः. तत्र कालूवेदीनामा क्षत्रियश्चिरमवसत्. स च तस्य ग्रामस्याध्यक्षोऽपि न्यायेनावर्तत. बहिर्गृहीतयवनराजसेवत्वेन प्रकटं स्वधर्माचारा-

नाचरितुमशक्तोऽपि प्रेम्णा स्वगृहे स्वाचारान् पालयामास. वाचकाः ! अयमेवास्मच्चरितनायकस्य पिता. अस्य वंशस्यापीतिवृत्तमाश्चर्यमयमेवास्ते. तदित्थम्.

भगवति अयोध्यानाथे स्वावतारकृत्यं समापयित्वा स्वधाम गते सति तदीयः कनीयान् पुत्र उत्तरार्यावर्ते नूतनमेव लवपुरं नाम नगरं वासयित्वा राज्यमकरोत्. ज्येष्ठः कुशश्च कुशावतीमात्मराजधानीं विधाय. तौ च परस्परं प्रेम्णा वर्तमानौ सुखेन स्वप्रजा अपालयताम्. एवंवृत्ते महति काले तदीया वंशजाः परस्परमद्विषुः. एकदा लवपुराधीशमनवहितमालोक्य कुशावतीनाथस्तमाक्रम्य तदीयं राज्यमात्मसादकरोत्. स तु लवपुराधीशः पराजितः कथमपि स्वप्राणान् रक्षितुं दक्षिणापथमागन्तुं प्रायसत्. मार्गे च कश्चन बलाढ्योऽमृतनामा क्षत्रियश्रेष्ठः श्रुतलवपुराधीशकीर्तिः स्वागतं विधाय तस्मै स्वकन्यां प्रददौ. लवपुराधीशोऽपि तावतैव सन्तुष्टः श्वशुरगृहे सुखेन तस्थौ.

कतिपयवर्षैस्तस्य सदीराव इति पुत्रो बभूव. स च साहसिको मातृमुखात् स्वपितुर्वृत्तं विज्ञाय दैन्यमवलोक्य च खिन्नस्तन्निराचिकीर्षुः स्वमातामहस्य सैन्यमादाय तं कुशावतीश्वरमाचक्राम. युद्धे च तं पराजित्योभयमपि स्वात्मसादरोत्.

दुर्दैवतो लब्धपराजयः कुशावतीश्वरः स्वकर्मणः फलमिदं मन्यमानः पुनरपि द्वेषं वर्धयितुमनिच्छुः क्षत्रियकर्म परित्यज्य वाराणसीं गतस्तत्र चतुरो वेदानधीत्य पाठनव्यवसायमारभत. ततःप्रभृति तं सर्वेऽपि जनाः 'वेदी' इत्युपनाम्ना समबोधयन्.

तस्मिन्नस्मिन् परमपवित्रे श्रीरामचन्द्रजन्मभूषिते सूर्यवंशे समुत्पन्नः कालुवेदिर्विपरीतसमयप्राप्तं ग्रामाध्यक्षव्यवहारं जीवनाय कुर्वन् सदा परमात्मसेवायां निमग्न आसीत्. तस्य पत्नी साध्वी त्रिपताका सर्वमपि स्वकुलवृत्तं जानन्ती सीता रामचंद्रमिव स्वपतिमसेवत. यथाशक्ति सर्वानपि समुपकुर्वन्ती माता त्रिपताका सर्वेषामादरपात्रमासीत् ।

एवंवृत्ते कियति काले साध्वी त्रिपताका वंशधरं पुत्रं नासूत. कालुवेदिस्तु पुत्रेच्छारहितः सर्वथा संसारकर्मणि उदासीन एवासीत्. सती त्रिपताकाऽपि पुत्राभावजन्यं दैन्यं नान्तःकरणेनोवाह. अथ सकलचराचरपालकस्य भगवतो नारायणस्याज्ञयाऽस्मच्चरित्रनायको निर्दुष्टे तस्याः प्रतिव्रतायास्त्रिपताकाया उदरे स्वधर्मोद्धारार्थमवसत्. तं च स्वभार्याया उदरे निवसन्तमवलोक्य स कालुवेदिः पुत्रलक्षणजिज्ञासया दोहदलक्षणानि स्वभार्यामपृच्छत्. सापि भाविनः सनातनधर्मोद्धारस्यानुकूलानि सर्वथाऽवनतैरार्यैरपेक्षितान्येव दोहदलक्षणान्यवदत्. तानि निशम्य कालुवेदिस्तथा तदीयाः संबन्धिनः परमतुष्यन्.

अचिरादेव समीपवर्तिनि कनकाचाग्रामे वसंस्त्रिपताकायाः पिता स्वकन्यां कठोरगर्भां निशम्यानघप्रसवाय स्वगृहमानेतुं तत्राययौ. कालुवेदिरपि परमानन्देन तां श्वशुरगृहं प्रेषयामास. साध्वी त्रिपताका स्वपितृगृहे निवसन्ती सदैव रामायणप्रभृतीनि पवित्रचरितानि पपाठ. रात्रिंदिवं कबीरादीनां भगवद्भक्तानां वचनानि पठन्ती तदर्थमनुध्यायन्ती सततं भगवदाराधने सक्ता न किंचिदपि लौकिकं वृत्तं मनसि चक्रे.

( २ )

अथ परिपूर्णेषु मासेषु प्रभाते प्राची भास्करमिव दिव्य-तेजोमयं शीखधर्मस्याद्यं स्थापकं गुरुराजं नानकदेवं प्रासूत. तस्मिन्दिने धूलिरहितं सौरं तेजः, नदीतरंगसंसर्गशीतलो वातः, प्रसन्ना दिशः सर्वेभ्यो जनेभ्योऽस्य नानकदेवस्य जन्म शुभमिति शंसयामासुः. पुत्रजन्मश्रवणेन सन्तुष्टो मातामहस्तया वार्तया कालुवेदिमपि संतोषयामास. जातकर्मविधानार्थमाहूता विप्रश्रेष्ठाः सर्वाणि जन्मनक्षत्राण्यवलोक्य विस्मिताः सनातनधर्मस्योद्धारकरं तमवदन्. मातामहश्च तेषां वचनेन संतुष्टो यथाशक्ति दक्षिणादानेन तान् संतोषयित्वा नियते समये 'नानक' इति प्रेमदर्शकेन नाम्ना तमलंचकार.

स च बालको नानकदेवः क्रमेण मातामहगृहे वर्धमानः, शीघ्रमेव वाचमलपत्. मातामहोऽपि आर्यधर्मरीतिमनुसृत्य यथासमयं विहितसंस्कारस्तं पंचवर्षं संभूतमवलोक्य विद्याग्रहणाय गुरुगृहमनयत्. तत्र कतिपयैरेव मासैः सम्यगधीतप्राथमिकशिक्षणः समये समये स्वप्रश्नैस्तं गुरुमपि कुण्ठितमतिमकरोत्.

अथ दशवर्षं तं पिता कालुवेदिर्यज्ञोपवीतसंस्कारेण संस्कृत्य वेदाध्ययनाय कस्याचित्पण्डितप्रकाण्डस्य सन्निधौ स्थापयामास. अनध्यायसमये च राजभाषामपि पठितुं कालपरिस्थित्यनुरूपं कस्याचिद्यवनस्य समीपे गन्तुं तमाज्ञापयामास. तत्र च निवसन्नानकदेवः सत्वरमेवोभयभाषापाण्डित्यं संपाद्य कृतकृत्योऽभवत्. यद्यपि स नानकदेवो लौकिकदृष्ट्या पण्डितः संवृत्तोऽपि स्वयमात्मानमज्ञमेव मन्यमानः पुस्तकपाण्डित्येना-

त्मानमकृतकृत्यममन्यत. स च रात्रिंदिवमेकान्ते स्थित्वा परमेश्वरं ध्यायंस्तत्वानुभवशालिनां साधूनां दर्शनैः संलापैः सेवया च स्वजन्मनः सार्थक्यं मेने. एवंवृत्तेर्नानकदेवस्य गृहे चित्तवृत्तिरेव नासीत्.

पिता कालुवेदिस्तु चिरात्संसारभारवहनक्लान्तः संसारभारवाहक्षमं स्वपुत्रमवलोक्य सन्तुष्ट आत्मानं संसारकर्दमात् मोचयितुं परमुपदिदेश. परन्तु प्रकृत्यैव विरक्तो नानकदेवस्तां संसारधुरं वोढुं नांगीचक्रे. तेन क्रुद्धः स कालुवेदिस्तं समये समये कटुवचनैस्ताडयामास. परन्तु नानकदेवो न स्वमनसः शान्तिमनाशयत्. पिता तं नानाव्यवसायेषु नियुंजानोऽपि यशो नालभत.

एकदा सस्यपरिपाकमनोहरं स्वक्षेत्रं पक्षिभ्यो रक्षयितुं पिता तं नानकदेवमाज्ञापयत्. नानकदेवोऽपि पितुर्नियोगमंगीकृत्य स्वक्षेत्रं ययौ. तत्र क्षुद्व्याकुलान् धान्यपूर्णेषु सस्येषु निपततः पक्षिसंघानवलोक्य दयाकुलः सहसोच्चैरिदं पद्यं पपाठ.

इदं क्षेत्रं हि रामस्य । कृपया धान्यभासुरं ॥
तन्निर्मितैः खगैर्व्याप्तं । भुज्यते का क्षतिर्मम ॥१॥ इति.

न च तान् पक्षिसंघान् धान्यभक्षणान्निवारयामास. कालुवेदिश्च तत्र समागतो रिक्तं स्वक्षेत्रमालोक्य दुःखी स्वपुत्रं संसारानर्हमेव मेने.

एवं वृत्ते साध्वी त्रिपताका माता स्वपुत्रस्येमामवस्थामालोक्य दुःखितमानसा तं नानकदेवं रहसि सम्यगुपदिदेश. स चोपदेश इत्थम्-

वत्स ! नानक ! ते पिता चिरं संसारभारवहनक्लान्त

आत्मानं मोचयितुकामस्त्वां संसारे प्रवर्तयति. त्वं तु प्रतिदिनं विरक्त इव लक्ष्यसे. मानवस्य प्रधानं कर्म परमात्मकृपासंपादनमेवेति अहं जानामि. सा च विरक्तिं विना दुर्लभा तथापि सा संसारदुःखान्यनुभूय तैः प्रतिक्षणं व्यापृतस्य जन्तोश्चेतसि यथा दृढमूला जायते न तथा तान्यननुभवतः. केचनैव प्राक्तनजन्मसुकृतशालिनो जन्मत एवालौकिकवैराग्यसम्पदन्विताः साधवः कृतकृत्या अभवन्. अयं न राजमार्गः. अविज्ञातस्वभावा महातपस्विभिरपि दुर्जयाश्चित्तवृत्तयः क्षणादात्मानमधःपातयन्ति. तन्मानवेन सर्वदैव चित्तवृत्तिविजयार्थं प्रयतमानेन सावधानेन भवितव्यं. चित्तवृत्तयो हि पारदसदृशा बलेन निरुद्धा अपि अन्यतः प्रकटीभवन्त्यः सर्वं परिश्रमं विफलयन्ति. तत्तासां विजयः शनैः शनैरेव भवेत्. यथा हि क्रीडाविशारदा व्याघ्रं स्ववशं विधातुं कदाचित्कशाभिस्ताडयन्ति कदाचिन्मधुरं भक्ष्यमपि ददति तथैव मनोविजयार्थं प्रयतमानेनासक्तिं विहाय तासां चित्तवृत्तीनां वृद्धिं नाशयित्वा पश्चादुचितविहितकर्माचरणेन तासामपि क्षयः कर्तव्यः. गृहस्थाश्रमो हि परमौषधं वैराग्यजनने. यथाह्यस्मिन्नाश्रमे प्रतिपदं दुःखवेदना संजायते न तथाऽन्येषु आश्रमेषु. तत्पुत्र ! यदि त्वं सत्यमेव परमात्मकृपां संपादयितुमिच्छसि तदा त्वं गृहस्थाश्रमं प्रविश. यथाशक्ति दारसंग्रहं कृत्वा तदुद्भवैर्दुःखराशिभिरुद्विग्नस्तनुभुतासु वासनासु अवश्यमेव वैराग्यमाश्रित्यात्मनः सार्थक्यं कुरु. तद्यदि मां प्रमाणीकरोषि तदा त्वमवश्यमिदं क्षणभंगुरं वैराग्यं विहाय दारसंग्रहार्थं यतस्व. त्वयि व्यवहारासक्तचित्ते सहस्रशः

कन्यकाः स्वयमागच्छेयुः. तद्यदि त्वमत्र स्थातुमिच्छसि तद् वरं यदि नेच्छसि तदा मातुलस्य गृहं त्वां प्रेषयिष्यामि. स च चतुरस्तव सर्वथा साहाय्यं करिष्यति. तद्विचार्य कथयेति.

नानकदेवश्च मातुरिदं भाषणं सत्यं मन्यमानः किंचिदप्यनुक्त्वा तत उत्थाय ययौ. रात्रौ च भूयोभूयो विचार्य मातुराज्ञानुवर्तनमेव श्रेयस्करमिति निरणयत्.

द्वितीयदिन एव त्रिपताकया विज्ञप्तो नानकदेवस्य मातुलस्तं गृहीत्वा स्वभवनं ययौ. स चाचिरादेव कस्यचिदिभ्यस्य पाकशालायां निरीक्षणकर्मणि तं योजयामास. तत्र यथानियमं कर्म कुर्वाणोऽपि यथाशक्ति परानुपाकरोदेव नानकदेवः. केचन प्रकृतिनीचाः शत्रवस्तस्य परोपकारपरतां वीक्ष्यासूयान्विताः स्वामिनः समीपे तस्य दोषानवर्णयन्. परन्तु तेन परीक्षिते सर्वस्मिन्नपि व्यवहारे नानकदेवस्याणुमात्रमपि दोषं स नालभत.

पिता कालुवेदिस्तथा माता त्रिपताका स्वपुत्रं नानकदेवं संसारासक्तं मन्यमानौ तदीयविवाहार्थमचेष्टेताम्. अचिरादेव तौ समीपवर्तिनो मान्यस्य कुलीनस्य क्षत्रियस्य कन्यां सुलक्षणां यथार्थनाम्नीं स्वस्नुपामकुरुताम्. नानकदेवश्च मातुरुपदेशं सततं मनसि कुर्वन् संतोषेण तया साध्व्या समं संसारयात्रां कुर्वाणः पुत्रद्वयं लेभे.

( ३ )

एवंरीत्या वर्तमानस्य नानकदेवस्य हृदये क्रमेण वैराग्यज्योतिः प्रादुर्बभूव. धनमदोन्मत्तस्य स्वामिनो दीनपीडाकराणि कुकृत्यान्यवलोक्य तस्य चेतः परमतप्यत्. प्रतिपदं स्वोदरपूरणस्य

कृते वेतनदायिनः स्वामिनो दुरुक्तिभिर्महान्तं खेदमुवाह. दीनानामपि सज्जनानां दारिद्र्यमूलकानीभ्यैः कृतानपमानान् पश्यन्निभृतं नेत्राश्रूणि मुमोच. राज्यमदोन्मत्तानां महंमदीयानां जितेष्वार्येषु दुर्वर्तनानि विलोक्य खिन्नो नानकदेवः सदैवैकान्तेऽचिन्तयत्- किमिदं न्याय्यं वा ? अस्यान्याय्यस्य प्रतीकारः कर्तुं शक्यो न वा ? कृतश्चेत्परमेश्वरस्य संमतो भवेन्न वा ? अस्माभिश्च पशुवत् संसारपंके निपातितैः स्वदैन्यं दूरीकृत्य परेषामपि तदपहरणीयं न वा ? अथवा पशुवत्प्रजामुत्पाद्य परेषां सुखसंपादनाय सा समर्पणीया वेति.

एवं विचिन्तयतो नानकदेवस्य मनः क्रमेण संसारपाशेभ्यो निवर्तितुमैच्छत्. साध्वी सुलक्षणा च चेष्टितैर्भर्तुर्हृदयं ज्ञात्वा भीता सावधानेन तं सिषिवे.

एकदा नानकदेवो यथानियमं प्रभाते स्वस्वामिनः सदनं गन्तुं प्रवृत्तो मार्गे महान्तं जनसमूहमपश्यत्. तत्र गतः किमिति जिज्ञासमानो यवनाक्रान्तमेकं दीनं ब्राह्मणमपश्यत्. तं च सर्वे महंमदीयास्तथा तन्मुख्याश्चावदन्—त्वं स्वधर्मं त्यक्त्वाऽस्मद्धर्मानुयायी भव, अन्यथा वयं त्वां हनिष्याम इति. स तु दीनो नयनाभ्यामश्रुजलं मुंचन् कातरभावेन सर्वेषां मुखानि पश्यन् सविनयं प्रत्युवाच—महाभागाः! यथा हि युष्माकं धर्मो युष्मभ्यं प्रियः, तथा मामकीनो धर्मो ममापि. अस्मद्धर्मोऽपि परममान्यैः प्राचीनैर्मुनिभिरेवोक्तः, पूर्वजैश्च पितृपितामहप्रभृतिभिराचरितोऽस्ति. तं चाहं कथं सहसा त्यक्ष्यामि. यदि मया स्वधर्मो वा हेयः कलेवरं वेत्याग्रहस्तदा जन्मान्तरसुलभस्य

क्षणभंगुरस्य शरीरस्य लोभेन शाश्वतिकं धर्ममहं न त्यक्ष्यामि. यो हि आशु विनाशिनः शरीरकस्य रक्षणाय महामूल्यं धर्मं त्यजति स महामूढो रत्नं दत्वा काचं गृह्णाति. तदेतन्मे न्याय्यं मतं. इदं च यदि भवद्भ्यो न रोचते तदाऽयं कण्ठ इति. असमाप्त एव तदीये वचने क्रुद्धास्ते महंमदीयाः खड्गप्रहारेण तं शकलयामासुः.

तदेतत्कृत्यं वीक्ष्य खिन्नो नानकदेवः यस्मिन् धर्मे दयाया अवसर एव न, स धर्मो वस्तुतो धर्मो भवेद्वा ? यत्र च बलात्कारेण दीनानां घातः कथ्यते स कथं पारलौकिकं स्वस्ति तदनुयायिनां कुर्यादिति चिन्तयन् ययौ. एवमेवैकदा सुप्रसिद्धे क्षेत्रे कैश्चिद्विप्रवरैर्यज्ञ आरब्धः. नानकदेवश्चादृष्टयज्ञरूपः कुतूहलेन तं द्रष्टुं ययौ. तत्र च गत्वा नानकदेवो वेदमंत्रानुच्चार्याग्नौ हवींषि निक्षिपन्तं विप्रवर्गमालोक्य विस्मितः सकृदेव तैर्निहतमजापुत्रमवलोक्य खिन्नो मनसि विचारयामास, कथमयमपि धर्मो धर्मः ? सर्वेषु धर्मेषु सनातनधर्मः परमोदार इति घण्टाघोषः, परंतु स यदि दीनानामजापुत्राणां घातं न्याय्यं मन्यते तदा किंनिबन्धनं तस्य श्रेष्ठत्वं. तदिमे ब्राह्मणा वाऽन्यथा कुर्वन्ति, किं वा सत्यमेव तथा सनातनधर्मो वदतीति महती मे शंका. कथं मन्मनसि बद्धमूलामिमां शंकां निराकृत्य मां कश्चित्सद्गुरुः सुखिनं कुर्यादिति. एवंविधाभिश्चिन्ताभिर्व्यग्रमानसः कथंकथमपि स गृहस्थाश्रमकृत्यान्यकरोत्.

एकदा प्रभाते स्वभवनस्य पुरतो देहल्यां स्थितो नानकदेवः किमपि विचारयामास. अत्रान्तरेऽकस्मादेव तत्र समागतः

काषायांबरधारी, जटाकलापभासुरमूर्धा, स्फटिकवलयदेदीप्यमानकर्णपाशः, भस्मच्छुरितविशालललाटपटलः, सव्यहस्तेन दण्डमुद्वहन् अपसव्येन कमण्डलुं तेजस्वी परिव्राट् साक्षाद्भगवान् शंकर इव तदीयं गृहमागच्छत्. आतिथेयो नानकदेवस्तं संन्यासिनं समागतमवलोक्य सन्तुष्टः पुरोगत्वा सविनयं गृहमध्यमानीय साध्वासने तमुपवेशयामास. अपूजयच्च तं यथाविधि.

स च परिव्राट् नानकदेवस्य श्रद्धां तथाऽन्तःकरणस्य स्थितिमवलोक्य सन्तुष्टः सानन्दमुवाच. वत्स! नानक! सम्प्रति कलिकाले त्वादृशा जना दुर्लभाः. अधुना हि सर्वत्रैषां विषयासक्तानामैहिकविषयलाभैकध्येयानां यवनानामुत्कर्षमवलोक्य शमप्रधाना अपि भारतवासिनस्तथा भवितुं चेष्टन्ते. येषां पूर्वजा मिथ्याभाषणं कदापि नाकुर्वन्, परदारेषु सर्वदैव मातृवदवर्तन्त, सर्वदा परमात्मचिन्तानिमग्नाः कथमपि संसारयात्रामकुर्वन्, तेषामेवार्याणां वंशजाः प्राणप्रियमपि धर्मं स्वल्पस्यैहिकविषयस्य कृते परित्यजन्ति. सर्वदैव दीनान् स्वबान्धवानेव मिथ्याभाषणैर्वंचयन्तस्तल्लब्धेनैश्वर्यलेशेनात्मानं कृतकृत्यान् मन्यन्ते? वत्स! यासां पावित्र्येण समुज्वलितमासीदस्य भारतवर्षस्य मुखं, ता एव स्वभगिनीरुपहारीकृत्य क्षुद्रं जीवितं रक्षन्ति आधुनिकाः क्षत्रियराजाः. अतएव दुर्धर्षं पूर्वजानामार्याणां दिव्यं तेजो धारयितुमशक्ताः कीटकसमाः पारतंत्र्यनरके पचन्ति. इमे महंमदीया बलादेव स्वधर्मप्रसारं कुर्वन्तः प्रतिदिनं सहस्रशो दीनानार्यवंशजान् स्वधर्माचरणात् परिभ्रंशयन्ति. इमे ब्राम्हणास्तु

पूर्ववदेव सर्वं मन्यमानाः परिस्थितिं न जानन्ति. समये समये परिभिन्नायां परिस्थितौ यो हि स्वस्वरूपं जानन्नानुकूल्येन वर्तते स एव जीवति. अन्यथा प्रतीपगामी महानदीवेग इव तस्यां परिस्थितौ विपन्नोऽवश्यं नश्यति. तत् सम्प्रति सनातनधर्मस्य मूलतत्वान्यादाय यथासंभवमाचारभेदान् न्यूनीकृत्य तस्य धर्मस्योज्जीवनं कर्तव्यं. अन्यथाऽयं धर्मोऽचिरादेव नामशेषः स्यात्. तदस्मिन् कर्मणि त्वादृशाः श्रद्धालव एवार्यवंशजा अपेक्ष्यन्ते. सम्प्रति हि अतिविरलानपि त्वादृशान् स्थाने स्थाने समुत्पादयतो भगवतोऽप्ययमेवाशय इति मे भाति. अहं च संन्यासधर्मांगतया सर्वत्र पर्यटन्निदमेवापश्यम्. तदधुना गृहस्थाश्रमेणालं. त्वादृशानां साहाय्यमपेक्षतेऽयं सनातनधर्मः. तद्वत्स ! त्यज गार्हस्थ्यशृंखलां. त्वादृशा नरपुंगवा अस्मिल्लोके किमप्यलौकिकं कार्यं कर्तुं जायन्ते न पुनः पशुवत् संतानोत्पादनाय. अन्यैर्मानवपशुभिः समुत्पादितैर्जन्तुभिर्व्याप्तेयं भारतमाता भारभुग्ना न्यूनीकरणायास्य भारस्य त्वादृशानां साहाय्यं याचते. तत् पशुवत् प्रजोत्पादनं कार्यं वा सनातनधर्मोद्धारो वेति त्वमेव स्वयं विचारयेति.

उक्त्वाचेत्थं तस्मिंस्तेजस्विनि संन्यासिनि अन्यत्र गतवति सति विवेकी नानकदेवस्तस्यां रात्रौ स्वयमेव विचारयामास. विचार्य चैवं संसारपाशांल्लीलयैवाच्छिनत्. कान्तां सुलक्षणां सान्त्वनपरैः शुभैर्वचनैर्बोधयित्वा स्वपुत्रद्वयं तदधीनं विधाय तां जगाद एतावत्कालमावामेकत्र स्थितौ सुखेन कालमयापयाव. सम्प्रति भारतवर्षस्य कल्याणार्थमहं त्वां त्यजामि. इमौ पुत्रौ सम्यक्पालिताववश्यमेव त्वां वार्धक्ये रक्षिष्यतः. तच्छोकं मा

कुरु. इति. साऽपि सती सुलक्षणा पत्युरिदं वचनं सत्यं मन्वाना शोकं विहाय तस्थौ.

( ४ )

एवं छिन्नसंसारपाशं तं नानकदेवमाकर्ण्य पिता कालुवेदिर्विस्मितस्तस्य मनो निवर्तयितुं स्वमित्रं प्रेषयामास. तच्च सत्वरं नानकदेवस्य समीपमागत्य तं बोधयामास. परन्तु पर्वतवान्निश्चलः स नानकदेवो मधुरैः सोपपत्तिकैर्वचनैस्तस्यैव मनोऽस्मात् संसारान्निवर्तयामास. इमां स्वमित्रस्यावस्थामवलोक्य कालुवेदेस्तूष्णीं तस्थौ. नानकदेवश्च स्वबालमित्रेण बालसिंधुनाम्ना पितृसेवकेन तथा मर्दानामिरासीनाम्ना पितृमित्रेण समं सकलां पृथ्वीं पर्यटितुं प्रथमतो मनोऽकरोत्. अचिन्तयच्च सम्प्रति किमपि नूतनमेवास्य सनातनधर्मस्योद्धाराय कर्मारंभणीयम्. प्राचीना ऋषयस्तथा स्मृतिकारा येन मार्गेणागच्छंस्तेनैव मार्गेण गमने साम्प्रतमस्योद्धारोऽशक्य इति स्पष्टमेव. यदा हि अस्मिन्नार्यावर्ते केवलमार्या एवाऽसंस्तथा तदीयामाज्ञां सर्वेऽपि जना अंगीचक्रुस्तस्मिन् समये विहिता आचारा यवनमयेऽस्मिन् समये कथं क्षेमदा भविष्यन्ति. अस्मिन्हि उत्तरार्यावर्ते बाहुल्येन यवना अल्पीयसामार्याणामुत्कर्षं कथं सहेरन्. तस्मादधुना सर्वसाधारणः कश्चन मार्गः स्वीकरणीयो भवेत्. तत्रापि लोकपरिस्थितिज्ञानमावश्यकमिति देशपर्यटनं कर्तव्यमेवेति.

नानकदेवः सह स्वानुयायिभ्यां ततो निर्गतः क्रमेण सर्वस्मिन् भारतवर्षे विद्यमानानि तीर्थान्यपश्यत्. परमपवित्रसलिलासु गंगादिषु नदीषु कृतावगाहनः सर्वामपि लोकस्थितिं साव-

धानेनावालोकयत्. तत्र च प्रतितीर्थं तीर्थोपाध्याया नानाविधानि कर्माणि भाविकैः कारयामासुः. नानकदेवश्च तानि यंत्रवत्प्रबोधं विना क्रियमाणानि कर्माण्यवलोक्य विस्मितःकिमनेन भवतीति स्वयं विचारयामास. तैस्तैः सनातनधर्माधारभूतैः पण्डितैः समं कृतसंलापोऽपि न मनसः शान्तिमलभत.

अथ महंमदीयधर्मं तथा तदीयानि मूलतत्वानि ज्ञातुमिच्छुर्नानकदेवः सहसा तस्य धर्मस्योत्पत्तिस्थानं मक्कानगरं ययौ. तत्रापि पश्चिमैर्यवनमुख्यैः स्वधर्मस्य मुख्यानि तत्वानि विस्मृतानि अन्येषां चावलंबितानि ददर्श.

एकदा च तस्मिन् सुप्रसिद्धे महंमदीयधर्मक्षेत्रे वसानो नानकदेवो लीलया तत्रस्थं महंमदीयधर्मस्य मुख्यमुपासनामंदिरमभिलक्ष्य पादौ प्रसार्य सुष्वाप. अचिरादेव तत्र मुख्यो धर्माध्यक्षः समाजगाम. स च तं स्वमन्दिराभिमुखं पादौ प्रसार्य सुप्तं क्षत्रियमवलोक्य क्रुद्धः परं निर्भर्त्सयामास. नानकदेवश्च तस्य दुर्भाषितान्याकर्ण्यापि शान्तः स्मेरवदनकमलः सविनयमुवाच धर्माध्यक्ष! अहं तु नावजानामि परमेश्वरं. परन्तु यस्मिन् देशे परमात्मा नास्ति तं देशमहं न जानामि. यदि सकलशास्त्रनिरीक्षणलब्धचातुर्यस्त्वं जानासि तदा कृपया मे निवेदय. श्व आरभ्य तत एव पादौ निधायाहं शेष्ये इति.

स तु धर्माध्यक्षस्तदिदं नानकदेवस्य भाषितं निशम्य कुण्ठितमतिरपि दुरभिमानेन यत्किंचिदपि वदन्नन्यत्र ययौ.

नानकदेवस्ततोऽफगाणिस्थानइराणप्रभृतिषु जनपदेषु यथेच्छं पर्यटन् पुनरपि स्वदेशमाजगाम. स्थाने स्थाने तस्य तेजस्विनीं

मुद्रां तथा विनयान्वितं भाषितमवलोक्य सर्वोऽपि जनो नितरां तमादृतवान्.

## ( उत्तरोभागः )

**१ भक्तिमार्गप्रसारः.**
**२ शिष्यसंघस्थापना.**
**३ सनातनधर्मशीखधर्मयोः संक्षेपेण तुलना.**
**४ अवतारसमाप्तिः कार्यमाहात्म्यं च.**

( १ )

एवं क्रमेण समग्रां पृथ्वीप्रदक्षिणां विधाय स्वदेशमागतो नानकदेवो मनसि विचारयामास. दृष्टा च सकललोकपरिस्थितिः, यथाशक्ति तैस्तैर्विज्ञैः समं संलप्य सनातनधर्मस्य तथा महंमदीयधर्मस्य रहस्यान्यप्यवगतानि. साम्प्रतं कमपि प्रयत्नं विधायायं सनातनधर्म उद्धरणीय एव. सम्प्रति वर्तमानयोरनयोर्महतोर्धर्मयोः परस्परं विरोध एव नास्ति. केवलमंगानां भेदेन भिन्नता. यथाहि कंचनैकं ग्रामं गच्छतोः पथोर्भेदेन ध्येयभेदो न भवति तथैव परमात्मकृपासंपादनैकध्येययोरनयोरपि. तत् परिस्थितिमनुसृत्याशक्यानुष्ठानानामंगानां त्यागेन तत्स्थाने सुकराणां निवेशेन पुनरप्यस्य सनातनधर्मस्योद्धारः कर्तुं शक्यः. अंगानामनुष्ठानाशक्यतया कृत्स्नस्य धर्मस्य हेयता तु नोचिता, यतो यथा हि सनातनधर्मेण परमात्मनो याथार्थ्यं तथा सत्यं स्वरूपं च ज्ञातुं शक्यते, न तथाऽन्यधर्मतः. अन्ये सर्वे धर्मा हि केवलमीश्वरं रक्षकं वदन्ति. परमपूज्यः सनातनधर्मस्तु जीवमेवेश्वरं.

तदनन्योक्तस्यास्य तत्वस्य लाभार्थं प्रयत्नेन रक्षणीय एवायं धर्मः. यथा हि उद्यमशीला मानवाः कंटकाच्छादितमप्याम्रवृक्षं फलभाराढ्यमवलोक्य दूरीकृत्य कंटकांस्तानि फलानि संपादयन्ति तथैव प्रकृतेऽपि. तत् सम्प्रति कर्मकाण्डोक्तकर्मणामनुष्ठातुमशक्यत्वेन तत्स्थाने भक्तिरेव निवेशनीया. सा च येन केनापि यत्र कुत्रापि कर्तुं शक्या निःसंशयं सुलभप्रचारा सनातनधर्ममुद्धरिष्यति. इति.

विचार्य चैवं स गुरुराजो नानकः सर्वत्रोत्तरार्यावर्ते पर्यटनशीलो भक्तिमार्गमुपदिदेश. व्याख्यापयामास च—यः कोऽपि निर्मलेनान्तःकरणेन परमात्मानं भजेत अवश्यमेव स परमात्मानं लभेत. सर्वेषां पालकः परमेश्वरो मानवैः कृतमार्यानार्यभेदं न जानाति. यो हि भगवतः परमप्रियायां मानवजातौ स्वार्थदृष्ट्या परिकल्पितमीदृशं भेदजातं प्रमाणीकृत्य द्वेषं प्रसारयति, तं दुष्टं पापमवश्यमेव स सर्वज्ञः क्रूरेण दण्डेन योजयति. इमे हि आर्या यदाऽर्यावर्तं न प्राप्तास्तदा सर्वैः समं प्रेमभावेन वर्तमाना ईदृशमभ्युदयं प्रापुः, परन्तु कालवशात्तदीया वंशजा यदाऽनार्यार्यभेदमजनयंस्तत एव दुर्दैवाक्रान्ताः सम्प्रति हीनदशां प्राप्ताः. इमे महंमदीया अपि पूर्वं तथा वर्तमानाः सम्प्रति तथा न वर्तन्ते. अधुना परद्वेषपराः सनातनधर्मस्य नाशाय प्रयतन्ते. इदं हि सर्वैरवधारणीयं—यत् परद्वेषः कदाऽपि क्षेमकरो न भवेदिति. यो हि दीनं वा बलाढ्यं वा परं द्वेष्टि स परमात्मानमेव द्वेष्टि. तस्मात् सर्वथा द्वेषभावं विहाय मानवेन वर्तनीयमिति. एवं सर्वत्र विख्यापयन् परस्परद्वेषकारीणि वैदिकंमन्यैरनुष्ठीयमाणानि वर्णभेदकारीणि कर्माण्यपि प्रतिषिषेध.

एकदा कश्चन विप्रो नदीजले स्थित्वा पितृतर्पणमकरोत्. तं च हस्तेन जलमादाय पुनरपि तत्रैव निक्षिपन्तमवलोक्य विस्मितः स्नानार्थं शिष्यसमूहेन समं नदीमागतो गुरुराजो नानकस्तं पप्रच्छ किमिदं करोषीति. स तु पितृतर्पणमहं करोमि. अनेन समंत्रकजलदानेन स्वर्गस्था मे पितरस्तृप्यन्तीत्यवदत्.

तस्मिन्नेव क्षणे यत्किंचिदप्यनुक्त्वा स नानकदेवो नदीजलमवतीर्णः स्नात्वा क्लिन्नांग एवांजलिना प्रकामं जलं तीरे चिक्षेप. शिष्यसंघश्च तदिदमपूर्वं कर्म वीक्ष्य रहस्यानभिज्ञतया विस्मितो लिखित इव तस्थौ. स तु ब्राह्मणः स्वकर्म समाप्य गृहं जिगमिषुः केवलं कुतूहलेन—भो नानक ! किमिदं करोषि ? कोवाऽनेन ते लाभ इति अप्राक्षीत्. गुरुराजो नानकदेवस्तु तदानीमेव—अहं मदीयक्षेत्रवासिभ्यो वृक्षेभ्यो जलं ददामीत्युत्तरयामास. तदिदमुत्तरमाकर्ण्य परं विस्मित उच्चैर्हसन् स विप्रवरः-नानक ! सत्यमेव त्वं भ्रष्टमतिरसि. क्रोशद्वयदूरे तव क्षेत्रेऽत्र क्षिप्तं जलं कथं गच्छेत् ? एतावदपि त्वं ज्ञातुं न शक्नोषीति जगाद.

सस्मितमुखः स नानकदेवः सत्वरं प्रत्युवाच—विप्रश्रेष्ठ ! यदि त्वयाऽत्र निक्षिप्तेन जलेनागणितक्रोशदूरे स्वर्गे निवसन्तः पितरस्तृप्यन्ति तदा क्रोशद्वयदूरे मदीये क्षेत्रे निवसन्तो वृक्षाः कथं न तृप्येयुरिति त्वमेव विचारयेति. स तु विप्रस्तस्येदं वचनमाकर्ण्य संजातलज्जः स्वभवनं ययौ. वाचकाः ! नानेनोदाहरणेन गुरुराजो नास्तिको वेदनीयः. नास्तिको हि सः, यः स्वेन्द्रियतृप्तिं विनाऽन्यत्किमपि स्वकर्तव्यमिह जगति न मनुते. नैवं नानकदेवोऽमंस्त. स हि ज्ञानं विना केवलं यंत्रवद्वेदोक्तक्रि-

याविधानमात्रेणैवेश्वरप्राप्तिर्भवतीति मन्यमानानां मतं निषिषेध.

स हि सर्वत्र प्रवसन् स्थाने स्थाने महतो जनसमुहानुपदिदेश—सज्जनाः ! बान्धवाः ! यं वयं दाशरथिं मन्यामहे यं च महंमदीया रहीमशब्देन व्यपदिशन्ति स न परमार्थत ईश्वरः किंतु तस्य भगवतश्चराचरपालकस्याद्वितीयसामर्थ्यस्यांशावेवेमौ. ये खलु सनातनधर्मानुयायिनस्तमेव परमात्मानं मन्यमानास्तथा महंमदीयैः समं कलहायन्ते तन्न सम्यक्. परमात्मा तु ताभ्यामन्यः स्वतंत्रो जन्ममरणरहित एव. तं हि यो मूर्तिरूपेण ध्यायेत्, यश्च केवलं मनसा, तावुभावपि स सममेवानुगृण्हाति. तस्मान्मार्गभेदेन परस्परं कलहो न न्याय्य इति. गुरुराजो नानकदेवः स्वयं व्याख्यानसमये उपनिषद्वाक्यानि तथा कुराणवाक्यानि स्वप्रतिपाद्यमानार्थप्रतिपादिकानि सहस्रशोऽवोचत्तेन यथा सनातनधर्मानुयायिनां स प्रियोऽभूत्तथैव महंमदीयानामपि.

( २ )

एवंरीत्या श्रीनानकदेवस्य सुधानिर्मले सकललोकसंतोषकारिणि वाक्सुधाप्रवाहे गंगौघ इव सकलमुत्तरार्यावर्तं व्याप्य वर्धमाने सति नानादिग्भ्यः संसारतापतप्ताः केचन महंमदीयधर्मानुयायिभिरुद्वेजिता, अन्ये च सनातनधर्मांगभूतकर्मकाण्डोक्तकर्माचरणेनासंतुष्टमानसाः, परे च ज्ञानलवहीनाः कर्मकाण्डोक्ताधिकारहीनाः, शिष्यसमूहाः प्रफुल्लं सकलपथिकजनसंतापहरं सहकारं भृंगा इव शिवं तं नानकदेवं सेवितुमाययुः. आगतांश्च तान् गुरुराजो नानकदेवो मधुरैः संलापैस्तथा यथाशक्ति साहा-

ध्यविधानेन च सुखिनश्चक्रे.

एकदा गुरुराजे नानकदेवे स्वशिष्यसंघेन समं विस्तीर्णे नदीतीरे तिष्ठति सति अतिदूरादागतः श्रुतनानकदेवकीर्तिर्महंमदीयधर्माभिमानी धर्माध्यक्षो विवादितुं तत्रैव समाजगाम. स च नानकदेवेन सत्कृतः प्रत्युवाच—सर्वेषु धर्ममार्गेषु महंमदीयधर्म एव श्रेयस्कर इति मे मतम्. यतोऽस्मिन् धर्मे परमेश्वरस्य निर्विकारस्य निर्गुणस्य यथा यथार्थं स्वरूपं ज्ञायते न तथाऽन्येषु धर्ममार्गेषु. सनातनधर्मे तु प्रत्युत मूर्तिकल्पनया परमेश्वरस्य व्यापकत्वं न्यूनीकृतम्. तत्सर्वैरपि परमेश्वरयाथार्थ्यज्ञानाय महंमदीयधर्म एव सेवनीय इति न्याय्यमिति. नानकदेवस्तु तस्य भाषणं निशम्योच्चैः प्रहसन्नुवाच. धर्माध्यक्ष! यथा हि सनातनधर्मानुयायिनः परमेश्वरस्य मूर्तिकल्पनया तदीयं यथार्थं स्वरूपं तिरस्कुर्वन्ति तथैव महंमदीयाअपि उपासनामंदिरेष्वेव तमुपासमानाः. यथा हि महंमदीयधर्मानुयायिनः परमेश्वरं व्यापकं मन्वाना अपि उपासनामन्दिरेष्वेव तमुपासते तथैव सनातनधर्मानुयायिनोऽपि मूर्तिं भजमाना अपि तं व्यापकमेव मन्यन्ते.

वस्तुतस्तु एते सर्वेऽपि नेश्वरविदः किंतु तदीयमार्गानुसारिण एव. भगवांस्त्रैलोक्यपालको नारायणो न मूर्तौ वर्तते नापि उपासनामंदिरे. स च सर्वेषां हृदये वर्तमानो मानवेभ्यः कर्तव्यमुपदिशति. तं चोपदेशं शृण्वन्नपि पापमलिनोऽयं मानव इन्द्रियजन्याभिर्वासनाभिर्बलादाकृष्टस्तदुपदेशानुरूपं न वर्तते. तस्मान्न तीर्थेषु न मूर्तिषु नापि उपासनामंदिरेषु परमात्मा वसति किंतु सर्वेषां प्राणिनां हृदये. स च केवलं सदाचरणेनैव लभ्यः.

दयाशीलो हि मानवो यथा परमेशं लभते न तथा रत्नमाला-भिरलंकृतां भगवतो मूर्तिमुपासमानो, नापि शतकृत्वो रमणीये उपासनामंदिरे प्रणिपतन्. एते दीना जना भगवत्प्राप्तिद्वाराणि. एतानदृष्ट्वाऽगणितान् ब्राह्मणान् भोजयद्भिस्तथा रात्रिंदिवं प्रणि· पतद्भिर्जनैर्जन्मशतैरपि स दयावत्सलः परमात्मा दुर्लभ इति निश्चितं मे मतमिति.

नानकदेवस्येदं यथार्थं भाषणमवलोक्य लज्जितः स महंमदीयधर्माभिमानी किमप्यनुक्त्वा स्वनिवासं ययौ.

प्रतिदिनं यथा सनातनधर्मानुयायिनो नानकदेवस्य शिष्या अभवंस्तथैव महंमदीया अपि. अत्र कारणं तु सत्यधर्मवादित्वमेव. ते च परस्परं मिलिताः क्रमेण पूर्वद्वेषं विहाय प्रीत्याऽवसन्.

नानकदेवश्च क्रमेण वर्धमानान् स्वशिष्यसंघानवलोक्य तान् सर्वत्रोत्तरार्यावर्ते उपदेशार्थं प्रेषयामास. ते च सर्वत्र पर्यटन्तस्तदीयं मतं निवेदयन्तोऽगणितान् जनान् स्वानुयायिनोऽकुर्वन्.

एकदा नानकदेवे स्वशिष्यैः समं संलापान्कुर्वति सति कश्चन धनाढ्यो वणिक् समागतस्तदीयं चरणकमलं प्रणिपत्य मुकुलितहस्तो विज्ञापयामास—गुरुराज ! अहं हि आबाल्यान्नानाविधदुराचारमग्नोऽगणितान् दीनान् जनान्निपीड्य धनराशिं समपादयम्. न्याय्यान्याय्यविचारदक्षः परमात्मा मदीयान् घोरानपराधान् वीक्ष्य पुत्राभावेन मामदण्डयत्. तं च दण्डं भुञ्जानोऽपि न तस्मात् पापकृत्याद्व्यरमम्. अहं च तथैवाग्रे वर्तमानो यदा सर्वं कुटुंबमेव नष्टमपश्यम् तदोद्घाटितनेत्रोऽस्य किं कारणमिति जिज्ञासमानः कुतश्चिन् महात्मनः सकाशादस्य

कारणं स्वीयं दुर्वर्तनमित्यवागच्छम्. तत एव संजातवैराग्यः संपादितं सकलं धनराशिं विषवन्मन्यमानो यथेच्छं सतां सेवायां तमुपयोक्तुमिच्छामि. सोऽहं त्वदीयां सर्वत्र प्रसृतां कीर्ति निशम्य समागतः पलितशुक्लशिरा अवशिष्टं धनसंचयं युगपदेव सत्सेवायामुपयोजयित्वाऽत्मानं निष्पापं करोमि. तत्कथं तस्य व्ययः कर्तव्य इत्याज्ञापयेति.

गुरुराजो नानकदेवस्तु तस्य सत्यं धनवैतृष्ण्यमवलोक्य सन्तुष्टस्तं प्रत्युवाच—वत्स ! अस्माकं नास्ति धनेन किमपि प्रयोजनं. सर्वस्य जगतः पालक एवाऽस्माकं मनोरथान् पूरयति. तथापि यदि सत्यमेव स्वीयं धनं सत्कर्मण्युपयोक्तुमिच्छसि तदा त्वमित्थं कुरु—

विजनस्थानवासिनं मां द्रष्टुं भावुका जना आगच्छन्ति. ते च शीतोष्णैः परिपीडिता महतः शरीरक्लेशाननुभवन्ति. तत्तेषां सौख्यार्थमत्र गृहाणि विरचयेति.

स चेभ्यो गृहीतगुर्वाज्ञस्तत्रैव महान्ति गृहाणि विरचयामास. अचिरादेव तत्राऽन्येऽपि जना आगत्यावसन्. तेन स महान् ग्रामोऽभवत्. तस्य नामाऽपि 'कर्तारपुरं' ( कर्तृपुरं ) इति बभूव. वाचकाः ! अधुनाऽपि विपाशानदीतीरे तं ग्रामं यूयं द्रक्ष्यथ. सर्वे शीखधर्मानुयायिनस्तत्र गत्वा तानि नानकदेवस्य निवासेन पवित्रीभूतानि स्थानानि पश्यन्त आत्मानं पुनन्ति. धन्यं च मन्यन्ते.

( ३ )

वाचकाः ! सम्प्रति यादृशं शीखधर्मस्य स्वरूपं दृश्यते

तस्य मूलभूतं तत्वं श्रीनानकदेवेन स्थापितमिति तेन रूपेण वयं सम्प्रति विचारयामः.

सनातनधर्मस्य परमं प्रयोजनं मोक्षः परमात्मस्वरूपलाभश्चेति सार्वजनीनमेव. स चात्मानात्मविचारैकलभ्यः. आत्मानात्मविचारश्च सत्यासत्यविज्ञानमूलक इति सर्वशास्त्रसिद्धान्तः. तच्च यथा निर्मलेऽन्तःकरणे प्रादुर्भवति नैवमनेकजन्मसंस्कारसंपादिताभिर्वासनाभिर्दूषिते. तादृशवासनानाशश्च स्वार्थबुद्धिनाशेन भवति. एवं च कृत्स्नस्याप्यस्य परमपुरुषार्थस्य मूलं कारणं स्वार्थबुद्धित्याग एवेति निर्णीतकल्पम्. तस्याः स्वार्थबुद्धेर्नाशाय सर्वे विभिन्ना धर्ममार्गा विभिन्नानुपायान् वदन्ति.

सनातनधर्मस्तु- नानाविधान्युच्चावचानि शरीरक्लेशकारीणि यज्ञादिकर्माणि तत्साधनत्वेन व्यपादिदेश. यदा हि यजमानः पारलौकिकं फलं स्वर्गं श्रेष्ठं मन्वानस्तत्साधनाय यतते तदा निसर्गत एव लौकिकेषु विषयेषु वैराग्यं जायते. स नानाविधाः शारीरिकीर्यातना अनुभूयागणितां सम्पदं व्यययित्वा स्वर्गसाधनार्थं प्रयततेऽवश्यं तदा तस्य शरीरेऽपि ममत्वं न्यूनीभवति. इमां स्वार्थबुद्धिहानिमेव शास्त्रकाराश्चित्तशुद्धिपदेन व्यपदिशन्ति. वेदविहितानामेषां कर्मणामाचरणात् स्वार्थबुद्धिहानिरूपा चित्तशुद्धिर्जायते. ततश्च तत्रात्मानात्मविचारयोग्यता संजायते. क्रियमाणे च तस्मिन्विचारे तत्वज्ञानोदयो भवति. तेन स कृतकृत्यो भवतीति सनातनधर्ममार्गः.

अस्मिन् मार्गे यत् खलु साधनत्वेन व्यपदिष्टं कर्माचरणं तत्र चाधिकारिविभागः स्थापितस्तत्रापि चातर्वर्ण्यं निर्दिशितं.

यदा चार्यावर्ते केवलमार्या एव प्रबला आसंस्तदा तत्सर्वं सुव्यवस्थितमासीत्. परन्तु यदारभ्य यवनादयोऽपि अत्रागच्छंस्तदा तादृशकर्माचरणं दुष्करमभूत्. अन्ये च हीना अनार्या अपि तैरनुगृहीताः स्वस्य धर्मपथमन्वैष्यन्. स्वाचारांश्चालब्ध्वा ते द्विजातीन् परमद्विषुः. तेन सर्वत्र कलहा एवाजायन्त.

किंच—यथा हि लौकिकचिन्ताविहीना आर्याः पूर्वं स्वानि कर्माणि निरासक्त्या चक्रुर्न तथा तदीया वंशजाः. ते च तादृशकर्माकरणेऽपि आत्मानं श्रेष्ठं मन्यमानाः परान् सदाचारपरानपि नीचानेवामन्यन्त. तेनाधस्तना वर्णाः क्रुद्धाः सर्वथा तदसूयान्विताः परमद्विषुः. तमिमं द्वेषं सर्वानर्थकरं विज्ञाय ते तेऽग्रिमाः साधव एतस्यैव निराकरणाय प्रायतन्त.

नानकदेवस्तु एतत्सर्वं मनसिकृत्वा तं चिरप्ररूढं पारतंत्र्यनरककारणं द्वेषं शमयितुमिच्छुरपि न सहसा चातुर्वर्ण्यं प्रत्याख्यातुं प्रबभूव. स च युक्त्या तन्निराकर्तुमिच्छुः प्रथमतः कर्ममार्गमेव प्रतिषिषेध. स हि मेने कर्ममार्गे प्रतिषिद्धेऽनायासेन तन्मूलकं चातुर्वर्ण्यमपि नश्येत्तथासति परस्परद्वेषोऽपि नामशेषः स्यात्. अयमेव शीखधर्मस्य विशेषः. शीखधर्मस्य प्राधान्येनेमानि तत्वानि. सर्वे जनाः समा यथेच्छं स्वाभीष्टमार्गेणेश्वरं प्राप्नुवन्ति. भगवान् भक्तिभावेन यथा प्रसीदति न तथा कर्मभिः. परस्परद्वेषो हि सर्वानर्थकरस्तं विहाय ये सदाचारेण वर्तन्ते ते सद्य एव परमात्मानं लभन्ते. मूर्त्यादयः केवलं कल्पिता एव. परमात्मा न तीर्थेषु न मूर्तिषु न वेदे नापि कुराणे वर्तते किंतु सर्वेषां हृदये. स च सदाचरणेन

तथा परस्परप्रेम्णा लभ्यते नान्यथेति.

वाचकाः ! सनातनधर्मे खलु यः कर्ममार्गः परमार्थवस्तु-प्राप्तयेऽभिहितस्तस्य स्थाने स नानकदेवः सदाचारं तथा परस्पर-द्वेषत्यागं साधनत्वेनोक्तवान्. अतएवास्य धर्मस्य नाम शिष्यधर्म इति तेन स्थापितम्. शिष्यस्य प्रधानं कर्म गुर्वाज्ञापरिपालनं सदाचारेण वर्तनं च, तदेतदुभयमपि यस्मिन् धर्मे प्राधान्येनोक्तं स एव शिष्यधर्मः. शीखधर्म इति तु तस्यैवापभ्रंशः. अस्तु.

सज्जनाः ! उभयमपि एतद्वर्णितं. साम्प्रतमनयोः कतर-त्क्षेमकरमिति विचारयामः. तत्र सनातनधर्मस्य परमं प्रयोजनं शीखधर्मस्यापि सम्मतं तेन तत्र विवाद एव न. विवादस्तु केव-लमंगे. तत्र कर्मकाण्डोक्तकर्माचरणं श्रेय उत भक्तिभावः सदाचरणं चेति विचारणीयं. यो हि सदसद्विवेकबुद्धिशाली निरभिमानतया क्षणमपि विचारयेत्तदा सोऽवश्यमेवेत्थं वदेत्-सत्यमेव कर्मकाण्डोक्तकर्माचरणरूपस्यांगस्यापेक्षया शीखधर्मो-क्तं सदाचरणं तथा भक्तिभावो निःसंशयं श्रेयस्करमंगं. वेदोक्तकर्माणि यावदुपकुर्वन्ति ततोऽप्याधिकमयं भक्तिभावः करोति. प्रत्युत तानि यथा जातिविभागविधानादपकुर्वन्ति नैव-मयं. अयं शीखधर्मो जात्यादिविभागानपेक्षः पुरुषप्रयत्नमेवा-पेक्षते. तेनात्र निविष्टाः सर्वेऽपि जनाः परस्परं बन्धुभावेन वर्तमानाः परोपकारपराः सुखेन जीवनं यापयन्ति. कर्मकाण्डो-क्तकर्ममार्गे तु सर्वत्रैव जातिविभागस्य निवेशितत्वात् परस्परं प्रीतिरुत्पत्तुमपि नार्हति कुतो वर्धितुं.

किंच- कर्मकाण्डोक्तकर्ममार्गे यावन्तो मानवजातिवि-

भागाः कथितास्ततोऽप्याधिक्येन यदाऽत्रार्यावर्ते विभागाः समपद्यन्त तदा तेनैव कर्ममार्गेण निर्वाहः कथं स्यात्. यवनादयश्च चातुर्वर्ण्यबहिष्कृता अपि लब्धस्वातंत्र्याः स्वीयमपमानं नासहन्त. अस्तु.

एवमंगविरोधपरिहारायैव श्रीनानकदेवेन शीखधर्मः स्थापितः. अतएव तस्य धर्मस्य सनातनधर्मोद्धारकत्वं. यदि सनातनधर्मविरोधी कश्चनान्य एव शीखधर्मः स्यात्तदा तस्य सनातनधर्मोपकारकत्वं न भवेत् .

केचन- सनातनधर्मस्य प्रधानं तत्वं मूर्तिपूजां तथा श्राद्धं च मन्वानास्तयोरस्मिञ्शीखधर्मेऽविधानात्तस्य सनातनधर्मांगत्वमपि नोपपद्यत इति स्वतंत्र एवायं धर्म इति वदन्ति. तत्तेषां सनातनधर्माज्ञानमूलकमिति न सत्यं. सनातनधर्मस्य यथाऽन्यानि अंगानि तथैवेमे अपि. नैतयोरेव सनातनधर्मः पर्याप्ततया स्थितः! अन्यथा सर्वोऽपि भक्तिमार्गः कर्मकाण्डोक्तकर्ममार्गस्य वैयर्थ्यं प्रतिपादयन् धर्मान्तरमेव स्यात्. नचैतद्विद्वन्मान्यं. अगणितास्तैस्तैः साधुवरैः प्रणीता ग्रंथाः सनातनधर्मोक्तं उपनिषदेकप्रमाणकं सच्चिदानन्दात्मकमेकं तत्वं सत्यमिति प्रतिपादयन्तः कथं विरुद्धधर्मवादिनो भवेयुः. अयुक्तं चेदं-यतः कश्चिन्मानवः सर्वांगसुन्दरमपि पंगुं त्वं पंगुरसीत्युवाच तावता तस्य वाक्यस्यार्थः स सुन्दर एव नेति न भवति. तथैव प्रकृतेऽपि सत्यमेव सर्वसुन्दरः सनातनधर्मः केवलमुच्चावचभेदान्विदधता दूषितः परन्तु तावन्मात्रे निराकृते स समीचीन एवेति कोऽपि वदेत्. तस्मादंगविरुद्धोऽयं शीखधर्मः सनातन-

धर्मविरुद्ध एव नेति अलंपल्लवितेन.

ये तु श्राद्धं मूर्तिपूजां च सनातनधर्मत्वेन वदन्ति तैरा-चारधर्माभिमानिभिरुपनिषद्धर्मो नाधिगत इति मन्तव्यं.

यत्तु शीखधर्मस्याधुनिकं रूपं तत्क्रमशस्तैस्तैः क्रूरैर्यवना-धिपैः कृतानामाक्रमणानां फलमिति अग्रे स्फुटीभविष्यति.

(४)

एवं दूरतो विचार्य कृत्स्नमपि सनातनधर्ममुद्धर्तुमिच्छुः श्रीनानकदेवस्तदंगानि संचस्कार. सर्वत्र तथोपदेशैश्च जनसमूहे चेतनामुदपादयत्. सर्वेऽपि जना बहोः कालाद्रूढं भेदमूलकं द्वेषं विहाय परस्परं प्रेम्णाऽवर्तन्त. महंमदीया अपि तं नानकदेवं स्वगुरुं मन्यमानास्तथा सनातनधर्मानुयायिनो नाद्विषन्.

वाचकाः! एवं रात्रिंदिवं स्वधर्मप्रसाराय प्रयतमानो नानकदेवः स्वीयमवतारं ग्रहगुणभूतब्रम्हपरिमिते ख्रीस्तीये वर्षे समापयामास. नानकदेवश्च स्थापितं स्वधर्मं प्रतिपालयितुमिच्छुः सर्वानपि स्वशिष्यान् सम्यक् वर्तनायोपदिश्य 'अंगद'-नामानं स्वशिष्यवरं स्वस्थानापन्नमकरोत्. सोऽपि स्वगुरुकल्पो महता सावधानेन तं धर्मं प्रतिपालयामासेत्यग्रे वयं निरूपयिष्यामः.

सज्जनाः! यदा नानकदेवः स्वावतारं समापयत्तदा मिलिता अगणिताः शिष्यसमूहास्तद्वियोगदुःखाकुलाः कथमपि स्वशोकमवधार्य महतोत्साहेन गुरुशरीरस्य संस्कारमकुर्वन्.

बान्धवाः! यथा हि अन्ये साधारणा जना उत्पद्यन्ते म्रियन्ते च तथैव सज्जना अपि, परन्तु तेषां कार्यभेदो महान् संभवति. साधारणा जना आहारनिद्रादिभिःपशुसमवृत्तयः केवलं स्वकु-

टुंबमेव पोषयन्ति. तदपि स्वेन्द्रियसुखवांच्छया. साधवस्तु परेषां सुखदुःखे आत्मन एव मन्यमानास्तयोर्निराकरणाय सततं प्रयतमाना महान्तं क्लेशराशिं प्राप्याऽपि नोद्विजन्ते. तेषां दुःखनिराकरणप्रयत्ना अपि चिरंतना न क्षुद्रजनस्येव क्षणभंगुराः. तेन तेषामेव यशस्तोमो जगतीतले वर्तते नान्येषां. अद्यावधि ये खलु साधव इह जगतीतले जातास्तेषामेव नामान्यापामरं श्रूयन्ते, न पुनः प्रतापशालिनां राज्ञां तथा कुबेरायमाणानां धनिकानाम्. किमत्र कारणं ? तेषां सर्वदा दुःखहानिकारिणी परोपकारबुद्धिरेव. राजानस्तथा धनिकाः परोपकारं कुर्वन्ति परन्तु तादृशोपकारविधानेंऽशतोऽपि स्वार्थबुद्धिरस्त्येव. अस्तु.

प्रियपाठकाः ! गुरुराजनानकदेवस्य चरितं समाप्तकल्पमेव. परन्तु कार्यमाहात्म्यं लोकोत्तरं वर्णनीयमेवास्ते. श्रीनानकदेवस्य मनसि आर्यधर्मानुयायिनां परस्परं द्वेषो नाशनीय इति महतीच्छाऽऽसीत्, परन्तु स अनादिकालात् प्ररूढं तं युगपन्निराकर्तुमात्मानमशक्तं मन्यमानस्तस्य मूलमेव चिच्छेद. तेनाग्रिमास्तदनुयायिनोऽलौकिकमुत्कर्षं प्रापुः. नानकदेवस्य चरितेऽयं विशेषो यद्यदि नानकदेव उत्तरार्यावर्ते न प्रादुरभविष्यत्तदा स देश आर्यनाम्नापि हीनोऽभविष्यदिति. महाभागाः ! यत्रासंख्या महंमदीयाः प्रतिदिनमार्यानाक्रम्य बलात्कारेण तान् महंमदीयानकुर्वंस्तत्र महता धैर्येणागणितानि दुःखानि विषह्य जीवन्ती आर्यसंहतिरद्यापि दृश्यते तत्र कारणं श्रीनानकदेवस्यावतार एव. अतएव दिवंगतेषु अपि श्रीगुरुराजनानकचरणेषु अगणिता जनास्तन्नामघोषेणात्मानं धन्यंमन्यास्तानि तानि गुरुराजेन सेवितानि स्थलानि तीर्थवदाद्रियन्ति.



# गुरुरंगदः

१ पूर्ववृत्तम्.
२ गुरुभक्तिः.
३ गुरुपदप्राप्तिः.
४ अलौकिककार्याणि स्वर्गवासश्च.

( १ )

गुरुराजो नानकदेवो योगदृष्ट्या यदा स्वावतारसमाप्तिसमयं समीपमागतमवालोकयत्तदा स्वशिष्येषु स्वकार्यनिर्वाहक्षमं पुरुषमपश्यत्. अचिरादेव 'लहना'-नामकः कश्चन शिष्यः सर्वगुणसम्पन्नस्तेन दृष्टः. तं वीक्ष्य सन्तुष्टो नानकदेवः शीघ्रमेव गुरुपदवीं तस्मै दत्वा तं 'अंगदनाम्ना' अलंचक्रे. वाचकाः! अयमेव शीखानां द्वितीयो गुरुः. अस्ति उत्तरार्यावर्ते मुक्तिसरं नाम नगरं. तस्य समीपे 'मत्तिकीसराय'—नामिका ग्रामटिका वर्तते. तत्र क्षत्रियकुलसंभवः फेरुमल्लनामा कश्चन धर्मशीलः क्षत्रियो न्यवसत्. तस्य च 'शुभराई'—नाम्नी पत्नी आसीत्. एतावेव जायापती अस्यांगदस्य जनकौ. अस्तु. तदिदं मिथुनं नीत्या वर्तमानं भाविनं शीखधर्मस्य द्वितीयं गुरुं 'लहना'-नामकं पुत्रं प्रासूत. स च बालकः क्रमेण वर्धमानः सदाचारादिभिः

सद्गुणैः स्वमातापितरावनुचक्रे. स तु बाल्येऽपि सदैव शान्तः कलहायमानान् क्रीडासखान् न्याय्यैः सान्त्वनवचनैः कलहान्नि-वर्तयामास. विशेषतश्च भगवदाराधनतत्परः स संसारे विरक्त इवासीत्.

स्वपुत्रं द्वादशवर्षं विवाहार्हं संवृत्तमवलोक्य स फेरुमल्लः पिता स्वानुरूपस्य कुलशीलसंपन्नस्य क्षत्रियस्य कन्यां स्वस्नुषा-मकरोत्. विरक्तोऽपि तदीयः पुत्रः पितुरिच्छामनुसृत्य मोदेन गृहस्थाश्रमं स्वीचकार. अथ तस्मिन् फेरुमल्लपुत्रे परमादरेण संसारसुखान्युपभुंजाने सति तस्य पुत्रद्वयं बभूव. प्रथमत एवेश्वरभक्तिसक्तः स यथा यथा संसारसुखान्यापातरमणीयानि दुरन्तानि असेवत, तथा तथा तस्य मनो गृहस्थाश्रमादात्मानं मोचयितुं जगाद. एवंविधाभिर्मानसिकीभिर्यातनाभिः परिपी-डितः स व्यचिन्तयत्— अधुना गृहस्थाश्रमेणालं. अयमपि आश्रमस्त्वया सेवनीय इति खलु पित्राज्ञाऽसीत्. सा च सम्यक् पालिता. पुत्रद्वयोत्पादेन पूर्वजानामानृण्यमपि संपादितं. इदा-नीं मानवदेहस्यापि सार्थता करणीया. दुर्लभं हि मानुषं जन्म पशुसाधारणैः कर्मभिर्विफलं भवेत्. तत्तदेव कर्मानेन देहेन करणीयं यत्कर्तुमन्ये प्राणिनो न प्रभवेयुः. तादृशं कर्म चात्मज्ञा-नमेव. तच्च गुरुकृपां विना नैव भवति. तस्मादधुनाऽस्मात्संसा-रपंकान्निर्गत्य सद्गुरुचरणावेव सेवनीयौ. अहं च चिरात्तत्र-भवतः सनातनधर्मोद्धारपरस्य श्रीनानकदेवस्य कीर्तिस्तोमं वि-द्वन्मुखेभ्योऽश्रौषम्, परन्तु तं साक्षात्कर्तुं नाशकम्. तच्छीघ्र-मेव कर्तारपुरं गत्वा गुरुचरणा द्रष्टव्या इति. एवं विचार्य स

लहनानामा फेरुमल्लपुत्रः स्वकलत्रं तथा पुत्रद्वयं स्वनिवासे पितुरधीनं विधाय स्वसंकल्पं कथयामास. दुःखाकुलोऽपि पिता फेरुमल्लः स्वपुत्रस्य परमार्थसाधनोत्सुकां चित्तवृत्तिमवलोक्य न किंचिदपि प्रत्युवाच.

तदानीमेव स कुतश्चिद्यात्राकारिणो जनसमूहादिमां वार्तां शुश्राव. कांग्रानाम्न्यां महत्यां हिमालयदर्यां ज्वालामुखी नाम महाक्षेत्रमस्ति. तत्र प्रायः सकला अपि उत्तरार्यावर्तवासिनो जनाः समागत्य पृथिव्या उदरान्निर्गच्छन्तीमग्नेर्ज्वालां वीक्ष्यात्मानं पवित्रं मन्यन्ते. तत्र च महति जनसमूहे स्वधर्मस्य प्रसारार्थं स्वयं नानकदेव एव स्वशिष्यजनेन सममागमिष्यतीति.

निशम्य चेमां वार्तां स लहनाख्यः फेरुमल्लस्य पुत्रः सत्वरं गुरुदर्शनाय ज्वालामुखीक्षेत्रमुद्दिश्य गन्तुं निरगात्. मार्गे च श्रुतगुरुदेवकीर्तयः सहस्रशो मानवा गुरुदर्शनेनात्मानं पावयितुं ज्वालामुखीक्षेत्रं गच्छन्तस्तेन दृष्टाः. तैः समं क्रमेण कतिपयदिवसैः स ज्वालामुखीक्षेत्रमागच्छत्.

तत्र च सर्वेऽपि क्षेत्रवासिनो जनास्तथाऽन्ये च यात्रार्थं मिलिता गुरुदेवस्य सत्कारार्थं परं प्रायतन्त. नियते दिने साक्षाद्दिनकर इव स्वकिरणैः स्वशिष्यैः समं श्रीगुरुराजो नानकदेवः समागतः स्वचरणधूलिभिस्तत् पावयामास. द्वितीयदिने घातिमधुरः सकलशास्त्रतत्वमयः परस्परद्वेषविषवृक्षच्छेदनवित्तः श्रीनानकदेवस्य वागमृतप्रवाहः प्रावहत्. तं च पर्याप्तं निपीय श्रोतारो मोदेन परिपूर्णा देवानपि क्षुद्रानगणयन्. लहनाभिधस्तु तेन वागमृतश्रवणेन छिन्नसंसारपाशः सहसाग्रे गत्वा

श्रीनानकदेवस्य परमपवित्रेऽगणितजनवन्दिते चरणयुगे निहित-मूर्धा विनयेन जगाद–नाथ! गुरुदेव! अयं देहः संसारशकटव-हनेन दुःखाकुलस्त्वामस्माद्दुःखादात्मानं मोचयितुं शरणमागतः. एनं त्यज वाऽनुगृहाण वा. सर्वथाऽद्यारभ्यास्मिन् देहे स्वामित्वं तवैवेति. तामिमां करुणरसमयीं वाणीं निशम्य दयासागरो नानकदेवस्तमुत्थाप्यानुजग्राह. अचिरादेवाकृत्रिमसेवया स तस्य द्वितीयं हृदयमभवत्.

( २ )

नानकदेवश्चैकदा स्वस्य पश्चात्सकलस्वारब्धकार्यक्षममेकं पुरुषवरमन्वैष्यत्. चिरादपि तादृशं पुरुषसिंहमलब्ध्वाऽऽत्मानम-कृतकृत्यं मन्यमानः श्रीनानकदेवः सर्वानपि स्वशिष्यान् परी-क्षितुमैच्छत्. प्रथमतः स सर्वानपि स्वशिष्यानाहूय महतीं सभां व्यधात्. तत्र सर्वेषां पुरतः स्वस्य ज्येष्ठं पुत्रं श्रीशचन्द्रमाहूय नानकदेवोऽपृच्छत्–वत्स! अस्मिञ्जगतीतले किं ते रोचत इति. स तु प्रकृत्यैव विरक्तः सहसा मुकुलितहस्तोऽवदत्. तातपादाः! केवलमीश्वरसेवां विना मह्यं किमपि न रोचते. क्षणभंगुरा-णामेषां लौकिकविषयाणां दुःखदत्वमालोच्याहमीश्वरभक्तिमेवा-धिक्येन शरणीकरोमीति.

नानकदेवश्चेदं पुत्रस्य भाषणमाकर्ण्य सन्तुष्टः प्रत्युवाच–वत्स! कृतकृत्योऽसि. मदीयादुदराज्जनित्वा त्वया लब्धव्यं लब्धम्. एवमेव यदि चित्तवृत्तिमग्रेऽपि रक्षिष्यसि तदा मान-वदेहसाफल्यं लप्स्यस इति.

ततः कनीयांसमपृच्छत्– किं ते रोचत इति. स तु अप-

रिपक्वमतिर्लौकिकं सुखं तत्साधनीभूतं विषयजातं च वव्रे.

अथानेनैव विधिना तेन नानकदेवेन पृष्टाःसर्वेऽपि शिष्याः किमपि किमपि लौकिकविषयजातमेवावांच्छन्. ततश्चैकस्मिन्नपवरके स्थितो लहनानामा फेरुमल्लपुत्रस्तेन नानकदेवेन सस्मितमुखं पृष्टः प्रत्युवाच—गुरुराज ! यदारभ्य भवदीया कृपा मया संपादिता तदाप्रभृति मदीये चित्ते वासनैव नास्ति. लौकिकं वाऽलौकिकं वा विषयं वीक्ष्य मन्मनसि वासना नैव प्रादुर्भवति. किंबहुना अनादिकालात्प्ररूढं वासनाजालं त्वदनुग्रहेण यदा छिन्नं तत आरभ्याहं वासनापदार्थमपि न जानामि. तथापि यदि प्रियपदार्थनिवेदनार्थमाग्रह एव चेदस्य विविधजननसंचितराशिलभ्यस्याखिलपापराशिक्षालनचणस्य सकलजन्ममरणादिदुःखनाशकस्य गुरुचरणारविन्दस्य सेवैव मे रोचते. इदमेव म ईश्वरः. इदमेव मे सर्वस्वं. अस्य सेवायै यदि परमात्मा मां भूयो भूयो जन्मशतैरपि योजयेत्तदा मयि महाननुग्रहः स्यात्. इति.

गुरुराजो नानकदेवस्तदीयमिदं भाषणमाकर्ण्य संतुष्टो विस्मितं शिष्यसमूहमवदत्—पश्यत गुरुभक्तेः फलं. यो हि समीचीनतया गुरुं सेवते स एवेदृशानि वाक्यानि उच्चारयितुं शक्नोति नान्यः. ये हि स्वगुरुं लौकिकविषयलोभेच्छयोपासते ते शिष्या एव न किंतु ते व्यवहारिणः. यथाहि लौकिकविषयसंपादनार्थं धनकामा धनिनमागत्य स्तुवन्ति तं सेवन्ते च, तथैवेमेऽपि. परन्तु मूढास्ते न जानन्ति गुरुः स्वयं विरक्तोऽकिंचनोऽस्माकं कथं मनोरथान् पूरयादिति. तैस्तदर्थं कश्चन धनाढ्यो वणिक् सेवनीयः. गुरुस्तु केवलं पारलौकिकेश्वरसेवामुपदि-

श्यात्मानात्मविवेकेन जन्ममरणदुःखमेव दूरीकरोति न पुनस्तस्मै प्रभूतं धनं ददाति. तस्माद्ये केचन संसारदुःखसंतप्ताः संसारनिवृत्तिं वांच्छन्तः स्युस्तैरेव गुरुः शरणीकरणीयो न लौकिकसुखकामैः. एवं सत्यपि बहव एव मूढा गुरोः प्रतिष्ठां तथा लोकैः कृतं सत्कारादिकमवलोक्य स्वयं तथा भवितुमिच्छव एवात्रायान्ति. परन्तु ते शीघ्रं गोधूमापणं गताश्मणकार्थिन इवोपहास्यतां व्रजन्ति. वस्तुतस्तु केवलं लौकिकप्रतिष्ठालाभलोभेन ये गुरुं सेवन्ते तान् सम्यक् जानन्तो जना अपि न सत्कुर्वन्ति. नापि ते वणिज इव लौकिकान्विषयान् संपादयितुं शक्नुवन्ति. तेनोभयतो भ्रष्टास्ते स्वयं नष्टाः परानपि नाशयन्ति. तस्मादीदृशाः शिष्या गुरुणाऽपि न करणीया जनैरपि नादरणीयाः. ये खलु पापा विषयेभ्यः स्वस्य चित्तवृत्तिमेव निवर्तयितुं न शक्नुवन्ति ते जनान् किं वदेयुः. कश्च तेषां केवलाक्षराणि प्रलपतां वचनानि निशम्य जनस्य लाभः. तस्माद्यथा सालंकृतोऽपि शवः स्वल्पेनापि लिंगदेहेन विहीनोऽमंगलो भवति, तथा गुरुभक्तिहीनोऽपारैश्वर्यसंपन्नोऽपि जनः शिष्यो न भवति. अतः सच्छिष्यं परीक्ष्य तस्मै एवाधिकारो दातव्यः. स एव लोकोद्धारे योजनीयः. अन्यथा कुशिष्यः कृतमपि कार्यं नाशयतीति. तदिदं गुरुराजस्य नानकदेवस्य वचनं निशम्य सन्तुष्टस्तस्य गुरुभक्तिं चावलोक्य विस्मितः प्रेक्षकसमूहस्तं परमादरेणापश्यत्.

एवं गच्छति काले गुरुराजो नानकदेवस्तस्य लहनाभिधस्य शिष्यस्योपरि परां प्रीतिमकरोत्. तेनान्ये शिष्या आत्मानमपमानितं मन्यमानास्तस्मा असूययन्त. श्रीनानकदेवश्च सर्वमिदं

जानंस्तस्य गुरुभक्तिं दर्शयितुं समयं प्रतिपालयामास.

एकदा श्रीनानकदेवो रात्रिंदिवं प्रवसन्नरण्यादरण्यान्तरं पर्यटत्. तत्र चान्नस्योत जलस्य नामापि नाश्रूयत. तेन क्षुद्व्याकुलास्तदीयाः शिष्या मुमूर्षव इवाजायन्त. तदानीं च मार्गे पतितं वस्त्रावगुण्ठितं शवमवलोक्य श्रीनानकदेवः सर्वानवदत्—शिष्याः ! इदं भक्ष्यं परमात्मनाऽस्मदर्थं प्रेषितम्. तदविलंबेन भक्षयतेति. सर्वेऽपि शिष्यास्तदिदं नानकदेवस्य भाषितमाकर्ण्य विस्मिताः प्रेतः कथं भक्षणीय इति शंकाकुलास्तस्थुः. तांश्चाज्ञापालनविमुखानवलोक्य सहासं गुरुराजो नानकदेवस्तं प्रियं शिष्यमवदत्—वत्स ! एते न भक्षयन्तीदं भक्ष्यं. वयमीश्वराज्ञापालनतत्परा इदं भक्षिष्यामः. तत्त्वमिदं प्रथमतः पश्य समीचीनं वा नवेति. अनवसितेष्वेव गुरुनियोगाक्षरेषु स शिष्यवरः स्वदन्तैस्तं प्रेतं विदारयितुमिच्छुः स्वमुखं तस्य प्रेतस्य समीपमनयत्.

श्रीनानकदेवस्तं स्वाज्ञापालनतत्परमवलोक्य सन्तुष्टस्तं निवार्य जगाद. वत्स ! तिष्ठ तिष्ठ. प्रथमतः कोऽयं पुरुष इति पश्याम इति वदन्नेव स्वहस्तेन तद्वस्त्रं दूरीचकार. सर्वे शिष्याश्च तदानीमेव स्वगुरुसरूपमेव तं प्रेतमपश्यन्. तेन विस्मितास्ते न किंचिदपि अवोचन्.

नानकदेवश्च तानुद्दिश्य प्रोवाच—शिष्याः ! यद्यपि समबुद्धेर्मम सर्वे एव यूयं प्रियाः, तथापि युष्माकं न्यूनाधिक्येन वर्तमाना गुरुभक्तिरेवेदृशं प्रीतिविशेषं जनयति. यथा सौरी प्रभा सर्वत्र समाऽपि सूर्यकान्ते पतिताऽग्निं जनयति, तथा गुरुभक्ति-

विशेषशालिनि शिष्ये सैव गुरुप्रीतिमधिकां जनयति. ये खलु गुरुं निर्विशेषं भजन्ते न ते गुर्वर्थं यतन्ते किंतु स्वात्महितायैव. तत्सर्वथा स्वयोग्यतां मनसिकृत्वा सर्वैर्वर्तनीयं न पुनः परद्वेषः कर्तव्य इति. ततः प्रभृति श्रीगुरुराजो नानकदेवस्तं प्रियशिष्यं 'अंगेखुद' नाम्ना स्वप्रतिबिंबवाचकेनाजुहाव. अन्ये जना अपि तं तेनैव नाम्ना व्यवहरन्तस्तस्यापभ्रंशं 'अंगद' नाम्ना चक्रुः.

( ३ )

श्रीगुरुराजो नानकदेवस्तमंगदनामानं स्वप्रियशिष्यं नानापरीक्षाभिः सम्यक् परीक्ष्य सन्तुष्टः स्वस्य पश्चात्तमेव स्वपदाधिकारिणं चक्रे. अशात्र सर्वमपि शिष्यवृन्दम्- वत्साः ! अहमचिरादेव स्वर्गं गमिष्यामि. अस्य धर्मस्याद्यापि बालत्वेन तस्य संरक्षकः कश्चन योजनीय एव. स चेद्योग्यस्तदा धर्मस्योन्नतिर्भवेत् परन्तु यद्यन्यथा तदा विहितमपि धर्मं स नाशयेत्. सर्वेषु छात्रगणेषु अयमंगदो यथा सर्वगुरुपदारोहणगुणसंपन्नो न तथाऽन्यः. तस्मादहमधुनैतस्मै स्वपदमर्पयामि. युष्माभिश्चाद्यप्रभृति तदाज्ञामेव ममाज्ञां मत्वा सर्वथा वर्तनीयम्. सर्वेऽपि यूयमिदं नूतनधर्मप्रसारणं कर्मैकमत्येन कुरुत. यावत्कालं परस्परमद्विषन्तो यूयं प्रेम्णा निवसिष्यथ तावत्कालं शक्रोऽपि युष्मान् पीडयितुं न शक्नुयात्. परन्तु केनापि कारणेन यदाप्रभृति द्वेषो युष्मासु बद्धमूलो भवेत्तदारभ्य युष्माकमनिष्टं स्यात्. इति.

आदिश्य चैवं सर्वान् रात्रावेकान्ते तं विनयावनताशिरस प्रियशिष्यमंगदं श्रीगुरुराजो नानकदेव उवाच. वत्स ! श्वआरभ्य भवानिदं गुरुपदमलंकरिष्यति. यद्यपि त्वं सज्जनः सा-

त्विक एवासि, तथापि क्षुद्रोऽप्यधिकारः सज्जनानपि विकुरुते तदा त्वादृशानां यूनां का कथा. अस्तु. इदं गुरुपदं खलु मयाऽस्य सनातनधर्मस्योद्धाराय निर्मितं न स्वसुखलाभार्थं. इमे महंमदीया यतःप्रभृति इदं भारतवर्षं प्रविश्य स्वधर्मप्रसारं बलादकुर्वंस्तदारभ्यैवायं सनातनधर्मो राजयक्ष्माक्रान्तशरीरो रोगीव प्रतिदिनं क्षीयते. तस्योज्जीवनार्थं स्थाने स्थाने भगवतैव प्रेरिताः सन्तः प्रयतन्ते. तत्त्वमपि मदीयं पदमारुढ इममुद्योगं सफलीकुरु. अत्र च परमं कारणं शिष्यसमूहवृद्धिरेव. सा च लोकानुरागं विना दुर्लभा. लोकाश्च निस्पृहे यथार्थवादिनि परोपकारतत्परे प्रतिपादनाव्यभिचारिवर्तने जने यथानुरज्यन्ति न तथाऽन्यत्र. तस्मात्केनापि लोकसंग्रहकारिणा मानवेनावश्यं स्ववर्तनमीदृशमेव कर्तव्यं. यो हि अन्यथा वदन्नन्यथा चरति नैव तास्मिञ्जनाः स्वप्नेऽपि विश्वसन्ति. अविश्वासो हि सर्वस्यानर्थस्य कारणं. तस्मात्केनापि अलौकिककार्यविधानेच्छुना प्रथमं जनविश्वाससंपादनं कर्तव्यं, तदर्थं च यथोक्ताचरणं च. स एव यथा वदति तथा वर्तते यो लोभहीनः स्यात्. लोभाकुला हि जनाः क्षणात्क्षणान्तरे स्वमतं विपर्यस्यन्तो लोक उपहसनीयतां व्रजन्ति. यो हि लोभहीनः स एव सम्यक् जानाति सम्यक् वदति सम्यक् वर्तते च. तस्मादगणितशिष्यसमूहेन कृतं सत्कारमुपहारीकृतं द्रव्यराशिमवलोक्य लुब्धो मा भूः. एते शिष्या उपहारमिषेण गुरुमेव परीक्षन्ते. यो हि परीक्षायामुत्तीर्णो भवति तं सर्वथैमे भजन्ते यश्चानुत्तीर्णस्तं न पुनः पश्यन्ति. तस्मात्सावधानेन वर्तमानः सर्वैर्जनैः सममात्मानमपि सुखभाजं कुरु. य-

थाहि बालकाः स्वपित्रोः सर्वं भारं निक्षिप्य निश्चिन्तास्तिष्ठन्ति तथैवेमेऽपि शिष्याः सर्वं स्वशीलरक्षणादिकं धर्मगुरौ. यदि च धर्मगुरुः शिष्यसमूहदत्तान् पदार्थान् भुंजानः सुखमग्नो धर्मरक्षणेऽनवहितो भवेत्तदा स सर्वशिष्यसंघवधस्य पापं लभेत. तस्मात्सर्वमिदं विचार्य सावधानेन वर्तस्व. त्रैलोक्यनाथो जगदीश्वरस्त्वां सदा सन्मार्गवर्तिनं विधायेमं धर्ममार्गं निष्कंटकं करोत्विति.

प्रकृत्यैव सच्छीलः सोंऽगदस्तदेतत् सर्वं गुरुवागमृतं निपीय तृप्तो बभूव.

( ४ )

गुरुरंगदो गुरुराजनानकदेवेन स्वयं स्वपदेऽभिषिक्तोऽपि परं विनयेनावर्तत. स च रात्रिंदिवं स्वगुरुं सेवमानः परं तमतोषयत्.

अथ दिवंगते गुरुराजे नानकदेवे स गुरुरंगदः स्वधर्मप्रसारमधिकं चिकीर्षुर्मनस्यकरोत्. स्वधर्मप्रसारे प्रमुखं कारणं सज्जनचरितानुशीलनं. इमानि सज्जनचरितानि तु मूर्तिमन्ति सद्वर्तनविधाने प्रतिकृतिभूतानीति सर्वे जना वदन्ति. अन्यत्र यथा तथा वा संस्कृतभाषा तथा तदनुबंधिन्यो वा भाषाः प्रचलन्ति, तत्र लिखितानि सज्जनचरितानि जनाः पठितुमपि शक्नुवन्ति. परन्त्वस्मिन्नुत्तरार्यावर्ते यवनानां प्राधान्येन तेषामेव भाषां स्वभाषां मन्यमाना आर्यवंशसंभवा जनाः स्वमातृभाषां नैव जानन्ति. तेन सज्जनचरितपरिशीलनं भावुकानां जनानामपि दुष्करं. अस्य दोषस्य निवारणाय स्वयंलिपिरेवान्या करणीया.

तस्यां च गुरुचरित्राणि विरचय्य तत्प्रसारद्वारेण जनानामज्ञानं दूरीकरणीयमिति.

विचार्य चैवं सोंऽगदः स्वयमेव कांचन लिपिं कल्पयित्वा तां गुरुमुखीनाम्ना व्यवाहरत्. तस्यां च प्राचीनं सर्वमपि वाङ्मयं तैस्तैः पण्डितैरनूद्य सर्वानबोधयत्. तथैव कृत्स्नमपि स्वगुरुचरितं बालसिंधुनाम्नः श्रीनानकदेवस्य प्रथमशिष्याद्बुद्ध्वा स्वर गुरुमुखीलिप्यामलिखत्. तेन सर्वेऽपि जना अनायासेन श्रीनानकदेवस्य चरितं पठितुमशकन्. पुरा खलु संस्कृतभाषाधिगमे यथाधिकारिविभागः कल्पितस्तथा स्वधर्मग्रंथपठणे न सोऽधिकारिभेदमकल्पयत्. तेन विद्याप्रसारः सर्वत्र त्वरया बभूव.

गुरुरंगद एवं विद्यां वर्धयित्वा दानगृहव्यवस्थामपि सम्यगकरोत्. श्रीनानकदेवो भक्त्या भक्तजनैरानीतानि सर्वाण्यप्युपहारद्रव्याणि परोपकारार्थमदात्. परन्तु अयोग्या मानवास्तैर्द्रव्यै स्वकुटुंबपोषणमकुर्वन्. अन्ये च यथासमयमन्नं लब्ध्वा निश्चिन्त आलस्यपरा विषयलालसयाऽन्यानप्यदूषयन्.

इमां दुरवस्थां दानगृहाणामवलोक्य खिन्नो गुरुरंगदस्तेषु योग्यानेव पुरुषान् स्थापयित्वा स्वधर्मशिक्षणलाभव्यवस्थामप्यकरोत्. तेनान्धादयोऽसहाया जना यथासमयमन्नं लब्ध्वा ज्ञानमपि अलभन्त. तेन ते दुराचारेभ्य उपरताः स्वधर्मशिक्षणमपि अज्ञेभ्यः स्वदेशबान्धवेभ्यो दत्वा तानपि सदाचारानकुर्वन्.

नानकदेवो यं सर्वानर्थकरं मत्वा तस्य नाशाय प्रायतत परन्तु संपूर्णं न लेभे यशस्तस्यास्य जातिभेदस्य नाशाय गुरुरंगदः परमचेष्टत. तेषु दानगृहेषु सर्वेभ्योऽपि साम्येनान्नादि

वितरणाय तदधिपानादिशत्. ते च तथैव वर्तमाना अचिरादेव नीचोत्तमभावकल्पनां जन्मसिद्धामनाशयन्. प्रथमतश्च महंमदीयानां सांनिध्येन स जात्यभिमान उत्तरदेशवासिनां विरल एवाभवत्, परन्तु गुरुरंगदस्तं समूलमुच्छेत्तुं सविशेषं प्रायतत. अचिरादेव प्रभूतं यशो लेभे. प्रायः सर्वेऽपि शीखधर्मानुयायिनो विस्मृतनीचोत्तमभावाः परस्परं बन्धुप्रेम्णा वर्तमानाः परां शान्तिं प्रापुः.






१ पूर्ववृत्तम्.
२ गुरुसेवा.
३ शत्रूद्भवः.
४ निस्पृहता. स्वर्गवासः.

( १ )

एवं सर्वत्र महतोत्साहेन गुरुराजनानकस्याज्ञां शिरसि कृत्वा गुरौ 'अंगदे' धर्मप्रसारं कुर्वति सति शीखधर्मः सर्वत्र प्रससार. अगणिता नूतना शिष्याः केवलं यंत्रवत् कर्मकाण्डोक्तकर्माचरणेन संत्रस्ता भक्तिभावाकुलाः शीखधर्मानुयायिनोऽभवन्. एवं गच्छति काले गुरुरंगद आत्मानं परलोकगामिनं मन्यमानः स्वानुरूपं शिष्यं धर्मपालनायान्वैपयत्. तदाऽतिवृद्धमेकं शिष्यं भक्तिमयमुपलभ्य सन्तुष्टः शीघ्रमेव तं गुरुपदाधिकारिणं चक्रे. स च शिष्यवरो गुरुरमरदासः. तस्य च पूर्ववृत्तमित्थं. अस्ति तस्मिन्नेवोत्तरार्यावर्ते क्षुद्रैका ग्रामटिका. तत्र तेजोभानुर्नाम कश्चन क्षत्रियो यथाशक्ति कृष्यादिभिरुपजीवन्नवसत्. तस्य पत्नी सलक्षणानाम्नी आसीत. स च तेजोभानर्धर्मेण

वर्तमानस्तया सह संसारयात्रां कुर्वन् पुत्रद्वयं तथा कन्याद्वयमिति चत्वार्यपत्यान्यलभत. तेजोभानुश्च सदैव परोकारतत्परः सकललोकप्रीतिं संपाद्य योग्ये समये परलोकमगात्. तदीयो ज्येष्ठः पुत्रोऽमरदासो योग्ये काले राजकुमारीं नाम कन्यां सकलशुभलक्षणान्वितां पर्यणयत्. यद्यपि अमरसिंहः कुलपरंपरागतं गृहस्थाश्रमं प्रविष्टस्तथाऽपि मनसा विरक्त एवासीत्. स चानधीतशास्त्रोऽपि महान् श्रद्धालुः सदैव नीत्याऽवर्तत. स चैतादृशो धार्मिको यदेकविंशतिकृत्वः स्वयं हरिद्वारं गत्वा गंगास्नानपुण्यं समपादयत्. अथैकदा महापर्वसमयः प्राप्तः. तदर्थं च सकलार्यावर्तवासिनो भावुका जना गंगास्नानार्थं हरिद्वारं गन्तुमारभन्त. तस्मिन् समयेऽमरदासस्य पत्नी राजकुमारी केनाऽपि रोगेण पीडिता शय्यायामेवातिष्ठत्. धर्मशीलोऽमरदासः स्वपत्नीं तथाभूतामवलोक्यापि विवेकावधृतमनाः परमात्मानं स्वपत्नीरक्षणार्थं प्रार्थयित्वा स्वयं गंगास्नानार्थं प्रातिष्ठत. स हि मेने-परमात्माऽनेन व्याजेन मदीयां धर्मप्रीतिं परीक्षत इति.

कतिपयदिवसैः सर्वैरीश्वरध्यानमग्नैः स्वसदृशैः पुण्यशीलैः सममरदासो हरिद्वारक्षेत्रमागच्छत. तत्र च निर्मले श्रीभगीरथस्य पुण्यप्रवाह इव जान्हवीस्रोतसि कृताभिमज्जन आत्मानं निष्पापमेवामन्यत. नानाविधानि पावनानि कृत्यानि पश्यन्नमरदासो विस्मृतस्वगृहचिन्तः कानिचिद्दिनानि तत्रोवास.

( २ )

अस्मिन्नमरदासे हरिद्वारक्षेत्रमधिवसति सति मध्यान्हे सर्वतः परिपूर्णरविकिरणसंतापसंतप्तेषु सर्वपदार्थेषु रविसंतापभिया

स्वस्वगृहाण्यधितिष्ठत्सु नागरिकजनेषु एकं देवालयं दूरागमनश्रान्तः श्वासाधिक्यकम्पमानगात्रयष्टिः पिपासातिरेकव्याकुलः संन्यासी समाजगाम. तं च तथावस्थं वीक्ष्य दुःखाकुलो वृद्धोऽमरदासो झटित्युत्थाय स्वागतं कृत्वा स्वासने तमस्थापयत्. स तु दीनः संन्यासी वार्धक्यनिर्बलः पदात्पदमपि गन्तुमसमर्थः सकृपमुवाच– वत्स ! शुभं तेऽस्तु. अनेन ते आदरातिशयेन संतुष्टोऽस्मि. अशक्तिकृतसाहाय्या पिपासा मां बलवती बाधते. अहं च गंगायास्तीरं गन्तुमसमर्थः. तत्कृपया यदि गंगाजलमानीय मह्यं दास्यसि तदा महानुपकारः स्यात्. अन्यथा कदाचिन्मे प्राणा अपि गमिष्यन्तीति.

अमरदासस्तु तस्मिन्नेव क्षणे स्वभाण्डं गृहीत्वा गंगातीरं गतोऽमृतमिव मधुरं तद्गंगाजलमानीय तस्मै वृद्धाय संन्यासिने ददौ. सोऽपि मुमूर्षुः संजीवनीमिव तत्पयो गृहीत्वा पर्याप्तं पीत्वाऽपनीतपिपासादुःख परं सुखी बभूव.

अथ स वृद्धः संन्यासी तममरदासमवदत्–वत्स ! महदुपकृतं त्वया. यदि त्वमत्र नाभविष्यस्तदाऽहं नाजीविष्यम्. दुर्लभाः खलु सम्प्रति त्वादृशाः परोपकारपरा जनाः. इमे हि यवना न केवलमस्माकं स्वातंत्र्यं तथा संपदं धर्मं चापहरन्ति किंतु आर्यवंशजैश्चिरात्संपादितां परोपकारबुद्धिमपि. सनातनधर्मानुयायिनोऽपि महंमदीयानामपकारनिमित्तमुत्कर्षमालक्ष्य स्वयमपि तथैव वर्तमानाः सर्वथा परोपकारबुद्धिं त्यजन्ति. अस्तु. गुरुकृपां विनेदृशी परोपकारपरता न संभवति. तत्कथय. को वा गुरुस्त्वया शरणीकृत इति.

स तु अमरदासोऽशरणीकृतगुरुः सहसा प्रत्युवाच—यतिश्रेष्ठ ! इमां परोपकारपरतां प्राक्तनैः सुकृतैरहं धारयामि. न पुनर्मया कोऽपि गुरुः शरणीकृत इति.

अनवसित एव तदीयेऽस्मिन् वचने तिरस्कारदर्शकवलीलांछितभालपटलः स संन्यासी जगाद. हा हन्त ! समग्रे जन्मनि अकृतगुरोर्जनस्य हस्तेन जलमप्यनाददानः कथमधुना मरणेऽनतिदूरे सति अस्य जलस्य पानेनात्मानमहमदूषयम्. परमात्मन् ! किमित्यकृतगुरोरस्य जनस्य दर्शनं कारयित्वा मामकृतार्थमकरोः. अस्तु. का गतिः. वत्स ! त्वमकृतगुरुरसि. यद्यपि त्वं जलदानेन मामजीवयस्तथापि मामधोगतिं गन्तुं कारणमभवः. तत्सम्प्रति ते सांनिध्यं परित्यज्याहमन्यत्र यास्यामि. उपकृतवन्तं त्वां वदामि. यो हि वार्धक्यजर्जरकलेवरो मस्तकविभ्राजमानशुक्लकेशोऽपि गुरुं न शरणीकरोति तं सर्वे जनाः संसारशौचासक्तं कीटं स्वार्थलोलुपं नीचमेव मन्यन्ते. तत्त्वमितो गत्वा कमपि योग्यं गुरुं शरणं गच्छ. तेनानुगृहीत एव त्वं चिरादपीमां परोपकारबुद्धिं पालयितुं क्षमः स्याः. नान्यथा. यो हि त्वादृशः प्रवया अपि न गुरुं शरणीकृत्य तत्कृतेन कर्तव्यबोधेनात्मानं कृतकृत्यं न करोति तं मानवाधमं मानवमेव न वदन्ति किंतु कीटं. तत्त्वं सत्वरं गुरुं शरणीकुरु इति.

उक्त्वा चेत्थं विस्मितेन तेनामरदासेन सविनयं स्थातुं कृताग्रहोऽपि स वृद्धः संन्यासी तस्मात्स्थानान्निर्गतः कुत्रापि जगाम. अमरदासोऽपि तीर्थकृत्यानि समापयित्वा ततो निर्गतः स्वभवनमाजगाम. ततःप्रभृति सर्वाणि संसारकर्माणि कुर्वन्नपि

सोऽमरदासः सद्गुरुलाभार्थं नितान्तं पर्युत्सुकोऽभूत्. तत्र तत्रान्विष्यमाणोऽपि न लेभे सद्गुरुं.

वाचकाः ! इह जगतीतले प्रायः सद्गुरवोऽतिविरलाः. ये खलु गुर्वाभासा नटा इव शिक्षणकार्याणि कुर्वन्त एव जीवन्ति त एव सुलभाः. सद्गुरुः स एव यः शिष्यं त्रिविधतापेभ्यो मोचयति. यो हि गुरुः स्वशिष्याय जगति विद्यमानेषु विविधेषु पदार्थेषु सत्यानृतमिथुनजन्यत्वं बोधयति स एव स्वयं नीतिज्ञस्तं शिष्यमपि नीतिमार्गे स्थापयति. यो हि स्वयमिन्द्रियाणि नियमयति स एवेन्द्रियनिग्रहार्थं शिष्यमुपदिशति. यश्च स्वयं स्वैरवर्तनः स कथं परेभ्यो नियमेन वर्तनायोपदेष्टुं प्रभवेत् ? उपदिशंश्च विफलप्रयत्न उपहसनीयतां न व्रजेत् ? ये च केवलं गुर्वाभासास्ते च स्वयं नष्टाः परानपि नाशयन्ति. तस्मात्केनाऽपि मानवेन विचार्यैव गुरुः करणीयो नान्यथा. अस्तु.

स चामरदासो रात्रिंदिवं गुरुशोधनतत्परोऽपि यदा न लेभे तादृशं गुरुं तदाऽतिखिन्नो मनस्यकरोत्—अहमस्मि सत्यमेवाभाग्यः. यस्य हि पापक्षयो जायते तं सद्गुरुः स्वयमागत्यानुगृह्णातीति पुराणेपु अपठम्. अहं तु तं शोधयन्नपि न लभे. तस्मात् ममैव दुरितं बलीय इति सत्यमिति. तद्दिनमारभ्य सोऽमरदासो दुरितक्षयाय सर्वदोपवासं चक्रे.

उपवसतस्तस्यामरदासस्याष्टसु दिनेषु व्यतीतेषु नवमे दिने महति प्रत्यूषे लब्धजागरः सोऽमरदासो दिव्यं भक्तिरसमयानां पद्यानां गानध्वनिं शुश्राव. प्रभातकाले काचन बालिका महता प्रेम्णा तानि पद्यानि गायन्ती कृत्स्नमपि तं प्रदेशममोहयत्.

तेनाकृष्टमनाः स वृद्धोऽमरदास उपवासक्षीणबलोऽपि यष्टिनिवेशितकृत्स्नदेहभारः शनैः शनैर्गीतध्वनिमनुसृत्याजगाम. स च यावत्समीपमागत्य पश्यति तावत्स्वभागिनेयपत्नीमेव तां कन्यामवागच्छत्. विस्मितोऽमरदासस्तामपृच्छत्—वत्से ! कस्येमानि पद्यानि ? केन वा त्वं शिक्षितेति. सा तु तमकस्मात्तत्रागतं वीक्ष्य विस्मितापि विनयेनावदत्—तात ! आर्य ! इमानि पद्यानि स्वयं नानकदेवैर्विरचितानि. तानि समगृह्णान्मम पिता अंगददेवः. मदीयया मात्रैवाहं शिक्षिता. सा च महति प्रत्यूष उत्थाय प्रतिदिनं नियमेनेमानि गायति. अहमपि तथैव करोमीति.

गुरुकृपासंपादनोत्सुकः सोऽमरदासस्तां पुनरप्युवाच—मां त्वत्पितरं दर्शयिष्यसीति. सा च निःसंदेहं जगाद. आर्य ! मम पितरं यः कोऽपि द्रष्टुं शक्नोति. विप्रो वा चाण्डालो वा संपन्नो वा विपन्नो वा तं वीक्षितुं शक्नोति. यद्याग्रहस्तदाहमप्यागमिष्यामीति.

अथ कतिपयदिवसैर्गृहीतभार्यानुज्ञः सर्वां गृहव्यवस्थां विधाय तया कन्यया समं सोऽमरदासस्तस्य महासाधुवरस्यांगददेवस्य समीपमाययौ. तपश्चर्याविशुद्धचित्तवृत्तिः सोऽमरदासस्तस्यांगददेवस्य पुरतः समागत्य यावत्तिष्ठति तावत्तस्य वैराग्यं तथा तदीयं समाधानं तदीयं हृदयमाजहार. तस्मिन्नेव क्षणे दण्डवत्साष्टांगं प्रणिपत्यामरदासोऽगददेवं व्यज्ञापयत्—गुरुराज ! अयममरदासः संसारसंतप्तचित्तः स्वदेहं सार्थं कर्तुं त्वत्तोऽनुग्रहं याचते. तदनुगृह्यायं सनाथः करणीय इति.

श्रीगुरुरंगदोऽपि तं सत्यमेव विरक्तमधिकारिणमवलोक्यानुजग्राह. तेनानुग्रहामृतेन शान्तचित्तः सोऽमरदास आनन्दसा-

गरमग्नो न किमपि बाह्यं वृत्तं ज्ञातवान्. तत्रैव सर्वदा गुरुदेवं सेवमानः सुखेन तस्थौ.

एकदाऽतिभयंकरविद्युल्लतानिपाते, अविरतजलवर्षावकर्दममयमार्गे, दुःश्रवमण्डूकाक्रोशबधरितजनकर्णे, प्रबलवातातिरेकभुग्ननिपतितवृक्षसमूहे, जलमयप्रदेशतयाऽलक्षितनिम्नोच्चप्रदेशे, कृष्णमेघावलीतिरस्कृतसूर्यतयाऽनभिज्ञातनिशादिने, शीतपीडापरिहाराय स्वस्वगृहस्थितसकलजने, कोटरावस्थितमूकखगे वर्षासमये प्रभातकाले प्रबुद्धोऽमरदासो यथानियमं स्वगुरोः स्नानार्थं जलमानेतुं नदीं ययौ. यदाऽरभ्यामरदासस्तस्यांगददेवस्य शिष्योऽभूत् तत आरभ्य प्रतिदिनं नद्या जलमानीय तदुष्णं विधाय स्नानार्थं स स्वगुरवेऽदात्. अद्य च यथानियमं जलमानेतुं निर्गतोऽमरदासो मेघवर्षाजलैरभिषिक्तगात्रोऽपि शनैःशनैर्मुखं परावृत्य नदीतीरं गन्तुमारभत. यथा यथा स स्वस्थानाद्विदूरं जगाम तथा तथा कुपित इव तदीयां गुरुभक्तिं परीक्षितुकाम इव भगवान् वरुणो महता वेगेन वर्षितुमारभत. सर्वत्र मार्गे जलं प्रभूतं कण्टकादीनपि आच्छादयत. वृद्धोऽमरदासः शीतकम्पमानकलेवरः कथमपि महता कष्टेन नदीतीरमाययौ. नदीं च तीरवृक्षाकर्षिजलौघां, कंटकशाखाच्छादिततीरां वीक्ष्याप्यखिन्नः स त्वरया जलेन घटं पूरयित्वा तं स्कंधेनोद्वहन् मुखेन परमेश्वरनामघोषं कुर्वन् स्वस्थानमागन्तुमारभत.

यद्यपि वृद्धस्यामरदासस्य गुरुभक्तिः प्रबलाऽऽसीत्तथापि वार्धक्यनिर्बलं तदीयं कलेवरं प्रबलवातनुन्नं शीतातिरेककम्पमानं पदात्पदमपि गन्तुमसमर्थमलक्षिते गर्ते न्यपतत्. पतनसमये

वृद्धोऽमरदासो न स्वशरीरं ररक्ष किंतु गुरुस्नानविघ्नभीत्या तं घटमेव. तेन महति पाषाणखण्डे निपतितोऽमरदासस्य देहस्तदाघातेन विक्रियां बभार. शीतातिरेकबधिरगात्रः सोऽमरदासोऽविभाव्य तां व्यथां घटरक्षणेन संतुष्ट उत्थाय जवेन स्वनिवासमाययौ. यस्मिन् स्थलेऽमरदासोऽपतत्तत्र तन्तुवायस्यैकं गृहमासीत्. महति प्रत्यूषे समुत्थितः स तन्तुवायः स्वकर्म कुर्वन्नकस्मात्तस्यामरदासस्य पतनध्वनिमाकर्ण्य स्वपत्नीमवदत्. को वा बहिर्निपतित इति. साऽपि श्रुतध्वनिः प्रत्यवदत्—गुरुसेवातत्परोऽमरदासो यथानियमं नदीजलं स्वगुरुस्नानार्थमाहरन् पतितः स्यात्. अन्यः को वेदृशे भयंकरवर्षाऽऽसारव्याप्तदशदिशि समये बहिर्निर्गच्छेदिति.

वृद्धोऽमरदासस्तु वन्हिं प्रज्वाल्य तज्जलमुष्णीकुर्वन् स्वशीतमपनेतुं तस्य पुरत उपविवेश. वन्हितापेन विरलीकृतहिमव्यथः सोऽमरदासः स्वजानुनि पतनसंभवां क्षतिमवलोक्याखण्डं ततो निर्गच्छन्तं रुधिरप्रवाहं च सस्मितमुखो जगाद—शरीरक ! त्वं यद्यप्यधुना जीर्णमसि परन्तु नूतना प्रतिदिनं वर्धमाना गुरुभक्तिस्त्वां गुरुसेवायामुपयुंज्यादेव. गुरुसेवां कुर्वदेव यदि मां मोक्ष्यसि तदा कृतार्थं भविष्यसि. तथैवाहमिच्छामि. तदधुना रुधिरविसर्गेण किं मां भीषयसि. तद्वृथा रुधिरं मा त्यज. संगृहीतमिदं रुधिरं गुरुसेवायामुपयुक्तं भवेदिति. एवं ब्रुवाणो मधुराणि भक्तिरसमयानि पद्यान्यगायत्.

द्वितीयदिने सर्वेषु शीखधर्मानुयायिषु स्वगुरोरंगददेवस्य मुखकमलात्तत्त्वोपदेशं श्रोतुं सभामण्डपमधिवसत्सु सत्सु सोऽ-

गददेवो महतोत्साहेन तत्वोपदेशं विधाय जगाद—शिष्याः! अद्य खलु गुरुभक्तेरपूर्वं स्वरूपं वो दर्शयामीति. उक्त्वा चेत्थं तं तन्तुवायमाहूय तन्मुखेनामरदासस्य सर्वमितिवृत्तं तानश्रावयत्. तेऽपि तन्निशम्य परममोदन्त.

समाप्त एव तस्मिंस्तन्तुवायभाषणे विस्मितेषु स्तब्धेषु शिष्येषु अंगददेवस्तस्यामरदासस्याह्वानाय शिष्यद्वयं प्रेषयामास. स तु भगवन्नामघोषानन्दमग्नो गुरोरनुज्ञां स्वीकृत्य तं सभामण्डपमागतः सविनयं गुरुं प्रणिपत्य मुकुलितहस्तयुगलस्तस्थौ.

अंगददेवस्तं शिष्यवरं प्रेम्णाऽवलोक्य स्वासनादुत्थाय तं गाढमाश्लिष्य जगाद. अमरदास! युष्माभिर्गुरुसेवया वयं सर्वे लज्जापिताः. नास्ति गुरुसेवायां युष्माभिः सदृशः कोऽपि. तदहमधुना युष्मान् श्रीनानकदेवस्थापितेऽस्मिन् शीखगुरुपदे स्थापयामि. अयं च देहो जीर्णः कदा वा स्वर्गं गच्छेदिति नियमो नास्ति. तत् को वा योग्यः शिष्योऽस्मिन् पदे योजनीय इति महती चिन्ता मामबाधत. परन्तु युष्मान् प्राप्याधुना निश्चिन्तः कृतकृत्यश्च संवृत्त इति. अन्ते च तं वृद्धममरदासं स्वस्थान उपवेशयित्वा सर्वैः शिष्यगणैः समं स्वयं तमनमत्. स चामरदासः किमपि वक्तुमपारयंस्तूष्णीं तस्थौ.

( ३ )

दिवंगते गुरावंगददेवे वृद्धममरदासं गुरुपदाधिष्ठितमवलोक्यान्ये बहवस्तमद्विषन्. तेषु बलाढ्यः शत्रुः श्रीगुरुराजनानकदेवस्य ज्येष्ठपुत्र एवासीत्. श्रीशचन्द्रः स्वस्मै गुरुपदमदत्वांऽग-

दाय स्वपित्रा तद्वितीर्णमवलोक्य खिन्नोऽन्यमेव 'उदासी'—नामकं सम्प्रदायं निर्ममे. निर्माय च तं स स्वयं सर्वत्रोत्तरार्यावर्ते पर्यटन् 'ईश्वरप्राप्त्यर्थं संसारं त्यक्त्वा संन्यास एव ग्राह्यः' इति सर्वेभ्य उपादिशत्. गुरुराजनानकदेवस्तु 'संसारं कृत्वापि परमेश्वरो लभ्यते' इति अकथयत्. शीखधर्मस्य च प्रधानं तत्वं संसारं कृत्वाऽपि परमेश्वरो भक्त्या संपादनीय इति आसीत्तदेव खण्डयितुं श्रीशचन्द्रः प्रचक्रमे. श्रीगुरुराजनानकदेवेनाऽपि श्रीशचन्द्राय स्वपदं न दत्तं तत्रापि कारणमिदमेव. अस्तु.

वाचकाः! भारतवर्षवासिनो जना यथा निवृत्त्यभिमुखाः शीघ्रमेव जायन्ते न तथा प्रवृत्त्यभिमुखाः. अत्र च कारणं बहोः कालात् सकलजगतीतले सर्वथा श्रैष्ठ्यं संपाद्य निर्विण्णैस्तदीयपूर्वजैर्लिखितानां ग्रंथानां सततपरिशीलनजन्याः संस्कारा एव. परकीया यथा केवलं प्रवृत्तिपराः सकलजगतीतले नानाविधानर्थान्कुर्वन्ति दुःखातिशयं च भुंजते. एवं स्ववंशजा अपि मा भुंजतामिति खलु तेषामाशयः. परन्तु तदीया वंशजा अज्ञानिनोऽन्यथैव केवलनिवृत्तावेव तेषां तात्पर्यमित्यजानन्. एतत्सर्वमालोच्य श्रीगुरुराजनानकदेवैः प्रवृत्तिमभिमुखीकृत्य तद्दोषपरिहाराय ते निवृत्तिमुपादिशन्. परन्त्वस्य शीखधर्मस्य बालत्वेन पुनरपि प्रसारितेनानेन 'उदासी'—नामकेन प्रवृत्तिनिषेधप्रधानेन मार्गेण तस्य घातः स्याद्वेति महान्तः शीखधर्मानुयायिनोऽचिन्तयन्.

एवमन्येऽपि तस्य परमात्मभक्तस्येश्वरध्यानासक्तस्य वृद्धस्यामरदासस्य शत्रवोऽजायन्त.

सज्जनाः! पश्यत लोभस्य माहात्म्यं. सकलजगतीतलेऽज्ञाननाशार्थमवतीर्णानां महात्मनां लोककृतान् सत्कारविशेषाननवलोक्य लोभाकुला अनधिकारिणो जना एवं कलहायन्ते, तद लोभमूलानां परद्रव्यहरणैकध्येयानां राज्ञां कलहा भवन्ति तेषु असंख्या जनाः प्राणान्मुंचन्तीति किमु वक्तव्यं. अस्तु.

भगवद्भक्तो गुरुरमरदासः श्रीगुरुराजनानकदेवस्य धर्मस्य रक्षणे गुरुणांऽगददेवेन नियुक्तमात्मानं मन्यमानस्तस्योपदेशाय दोषनिराकरणाय चोत्तरार्यावर्ते द्वाविंशति नूतनानि पीठानि स्थापयामास. तेषु चोत्तमोत्तमान् ज्ञातसम्यक्शीखधर्मतत्वान् सदाचरणतत्परान्निस्पृहान् स्वप्रतिबिंबानीव शिष्यान्नियोजयित्वा तद्द्वारा स्वधर्मग्लानिं दूरीचक्रे. वाचकाः! तस्मिन् समयेऽगणिताः स्त्रियोऽपि शीखधर्मानुयायिन्यो भूत्वा सर्वत्र तस्य धर्मस्य प्रसारमकुर्वन्.

( ४ )

एवं युक्त्या महता चातुर्येण च स्वशत्रूनामशेषान् व्यधाद्गुरुरमरदासः. तेन तस्य कीर्तिः सर्वत्र प्रससार. अगणिता जनास्तदीयां कीर्तिमाकर्ण्य तद्दर्शनार्थमागच्छन्. तदीयां चित्तवृत्तिं तथा समाधानं च वीक्ष्य सुतराममोदन्त.

एकदा मोंगलकुलदीपः सकलसामन्तचक्रवालाभिवन्दितः सार्वभौमो दिल्लीश्वरोऽकबरस्तदीयं कीर्तिस्तोममाकर्ण्य संजातदिदृक्षस्तस्यामरदासस्य निवासमाजगाम. नमस्कृत्य च तं स्थितस्तदीयां तपस्यां तथैश्वरीं कृपामवलोक्य सन्तुष्टः किमपि उपायनीकर्तुमियेष. विज्ञापयामास च तथा.

स तु भक्तशिरोमणिरमरदासस्तदीयामुपायनस्वीकारस्य विज्ञप्तिमाकर्ण्य सहासमवोचत्. राजन्! यद्यपि वयं लोकदृष्ट्या दरिद्रा एव तथापि अस्मासु अस्ति अमूल्यं दुर्लभं गुप्तं धनं. यस्य लाभेन वयं लौकिके धन उदासीना भवामः. यथा हि आपणे साधारणो धान्यादीनां विक्रेता स्वक्रय्यवस्तूनि प्रसार्य तिष्ठति नैवं रत्नादीनां विक्रेता. स हि बाह्यतो निर्धन इव दृश्यते तथाप्यनर्घाणि रत्नानि लोहपेटिकासु बिभर्ति; तथैवेमे साधवः. यो हि चराचरस्य जगतः पालकः, यश्च जन्मान्तरे कृतायास्तपस्यायाः फलेन राज्यलाभरूपेण युष्मान् योजयति, स यदि नित्यसंनिहितोऽस्माकं तदा कथमस्मान् दारिद्र्यं बाधेत. दारिद्र्यं तान् बाधते ये खलु लोभाकुलाः. वयं चापारैश्वर्यसच्चिदानन्दपरमात्मतादात्म्यं प्राप्ताः कस्मिन्नप्राप्ये विषये लोभाकुला भवामः. यश्च सकलजगतीतलस्वामित्वं लब्ध्वाऽपि न निर्लोभः संवृत्तः स च क्षुद्रादस्मात्कीटादपि नातिरिच्यते. यथा हि कीटा उदरपूरणपर्याप्तं नरकं भुञ्जाना अपि पुनर्द्वितीयदिने तल्लोभाकुला भवन्ति, एवमेव लोभी मानवोऽपि. यस्य तु परमेश्वरकृपया लोभ एव समूलमुच्छिन्नस्तस्य मानवेश्वरस्य कृतकृत्यस्य तुलां शक्रोऽपि नारोहति तदा कुतस्त्वादृशा राजानः. तदयं सम्यक्सेवितगुरुचरणारविन्दोऽमरदासः सत्यमेव निर्लोभः संवृत्तः कथं त्वदीयामिमां प्रार्थनां सफलीकरोतु. बहवो हि जना लोभाकुला अहर्निशं किमपि किमपि प्रार्थयन्तस्त्वदीयं कीर्तिस्तोमं गायन्तः श्वान इव त्वदीयं गृहद्वारमागच्छन्ति. तेषामेवान्यतमाय कस्मैचिदिदमुपायनं वितरेति.

तदिदमोजस्वि सत्यमेव निर्लोभमूलकं प्रतिवचनमाकर्ण्य विस्मितोऽकबरो न किंचित्प्रत्युवाच.

एवं सर्वत्र स्वधर्मस्य प्रसारं विधाय कृतकृत्यः स गुरुभक्तो गुरुरमरदासश्चरमे वयस्यपि गुरुपदमारुह्य शीखधर्मप्रसारकार्यं महदकरोत् अन्ते च गुरुं रामदासं स्वपदाधीश्वरं विधाय स्वर्गं जगाम.








( १ )

वृद्धेऽमरदासे गुरुपदमधिवसति सति प्रतिदिनमगणिता जना अनुग्रहार्थमागच्छन्. यथाधिकारं तस्य महात्मनोऽमरदासस्यानुग्रहं लब्ध्वा कृतकृत्या अप्यभवन्.

एकदा सर्वैः शिष्यगणैः समं सभामण्डपमधिवसति गुरावमरदासे कश्चन तेजस्वी दूरागमनश्रान्तो रविकिरणसंतापारक्तमुखो शान्तिनिवासः क्षत्रियबालकः सहसा पुरत आगतः कोमलाभ्यां हस्तकमलाभ्यां तस्यामरदासस्य चरणकमले धृत्वा सगद्गदमवोचत्—गुरुराज ! अयमनाथो बालको रक्षणीय इति. गुरुरमरदासस्तथा सर्वेऽपि तत्रस्थाः शिष्यगणास्तं बालं वीक्ष्य विस्मिता अजायन्त. दयासागरोऽमरदासस्तं स्वहस्तकमलेन स्पृशन् सस्नेहमुवाच. वत्स ! कस्त्वं. त्वदीयौ मातापितरौ क्व. केन दुःखेनाकुलस्त्वं मां शरणमागच्छ इति. गुरोरमरदासस्य

प्रेममयं भाषणं निशम्य संजातधैर्यः स बालकः प्रत्युवाच. गुरुराज ! अस्मिँल्लाहोरनगरे 'चूनामंडी'–नामकः कश्चन विभागोऽस्ति. तत्र सदाचाररतः कश्चन 'हरिदाससोधी'–नामकः क्षत्रियश्रेष्ठोऽवसत्. स एव मे पिता. स तु न्यायेन यथाकथंचिद्द्रव्यं संपाद्य कुटुंबभरणमकरोत्. माता मे दयाकुमारी परमसाध्वी पतिसेवातत्परा परमसंतोषेण संसारमकरोत्. मम बाल्य एव पिता स्वर्गमगच्छत्. तद्वियोगदुःखाकुलाऽपि मे माता मदीयस्नेहाकृष्टा अहर्निशं मदीयं कल्याणं वांच्छन्ती कथमपि भर्तृविरहदुःखमसहत. प्रकृत्यैव च सा परमात्मभक्तिरम्बा क्षणभंगुराणि संसारसुखान्यवलोक्य प्रतिदिनं सुलभान् दुःखराशीननुभवन्ती स्वप्राणेभ्योऽपि प्रियं मां संसारदुःखानि मा बाधन्तामिति मन्यमानाऽऽबाल्यादेव परमात्मभक्तिविधानायाशिक्षत. अहमपि तदेकदैवतः प्राक्तनसुकृतानुचोदितः प्रीत्या सर्वदैव मात्रा शिक्षितानि श्रीगुरुराजनानकदेवविराचितानि पद्यानि गायंस्तत्सेवामग्नो महताऽनन्देन कालमनयम्.

अथ सकलाविनयास्पदे, दुर्बोधबीजप्ररोहवर्षाकाले, अविवेकताण्डवांगणे, व्यसनसंततिसहोदरे, इन्द्रियतृप्तिविधानैकध्येये, बलमदातिरेकसुलभस्खलने, सुबोधसलिललाभोपरे, सकलपापकर्मसाहाय्यकारिणि, परावमानदक्षे, गर्वातिरेकमेघपटलाच्छादितज्ञानसूर्ये, अज्ञानमये, यौवने कृतप्रवेशं मां वीक्ष्य चिन्तातुरा माता मामेकदा रहस्यवदत्–वत्स ! इदानीं त्वं युवा संवृत्तः. यौवनं यथा दुर्जनसंगत्या सकलदोषास्पदं भाविनो दुःखस्य कारणं तथैव सज्जनसंगत्या सकलभाग्योदयकरमपि. अ-

स्मिन्ननेकविधजननिवासे विचित्राचित्तवृत्तिव्याकुले महति नगरे निवसन् प्रायो दुर्जनसंगत्या दूषितः स्याः. यद्यप्याबाल्यात्त्वं मया सद्वर्तनेन शिक्षित एव तथापि बलवानिन्द्रियवृत्तिमोहः. स च योगिनोऽपि मोहयति किमुत त्वादृशान् बालान्. तस्मादधुना त्वं कस्यचित्सज्जनस्य समीपे गत्वा तिष्ठ. यद्यपि पुत्रस्नेहो मां मोहयति विशेषतश्च भर्तृविरहितां, अस्यां वृद्धावस्थायामन्यः कोऽपि मम साहाय्यकारी नास्ति तथापि मात्रा मया स्वदुःखानि विस्मृत्य प्रथमतस्त्वदीयं कल्याणं द्रष्टव्यमेव. वृद्धाऽहं शीघ्रमेव परलोकं यास्यामि. परन्तु त्वां सदाचारसम्पन्नं सुपुत्रमवलोक्य यथा सुखभाक् स्यां न तथा तव सेवया. मातुरिदं कर्तव्यं यत्स्वसुखं विहाय प्रथमतः पुत्रस्य कल्याणं करणीयं. अन्यथा पशौ मानवे च को वा विशेषः. यथा हि पशवो निसर्गाधीनाः पुत्रानुत्पाद्य तेषां कल्याणचिन्तां न वहन्ति तथैव यदि मानवजातिः स्यात्तदा महती हानिः स्यात्. तत्त्वामहं कस्याऽपि सज्जनस्य सांनिध्ये स्थापयितुमिच्छामि. सम्प्रति ह्यस्मिन् समग्र आर्यावर्ते यथा शीखधर्मगुरुर्महात्माऽमरदासः सज्जनः परोपकारपरोऽस्ति न तथाऽन्यः कोऽपि. यथाऽन्ये साधवः किमपि किमपि प्रलपन्तोऽपि स्वार्थसाधन एव तत्परा नैवमयं. अयं च भक्त्या सेवितः कल्पद्रुम इव योग्ये काले फलेन योजयति. तच्छ्रुव एव त्वमितो निर्गतस्तं शरणं व्रज. तत्र च निवसन् सदाचारेण भक्तिविशेषेण च तं तोषय. तेन चानुगृहीतः सुखी भवेति. अहं च बाल एव मातृवियोगदुःखाकुलोऽपि तदाज्ञापालनमेव स्वकर्तव्यं तथा श्रेयस्करं च मन्यमा-

नस्तदीयौ चरणावभिवंद्येमौ सकललोकाभिवन्दितौ सद्गुरोस्तवचरणावभिवंदितुमागत इति.

गुरुरमरदासस्तस्यामुना वृत्तेन संतुष्टस्तमनुगृह्य स्वसमीपेऽस्थापयत्.

एवं गच्छति काल एकदा गुरोरमरदासस्य पत्नी स्वकन्यां विवाहयोग्यामवलोक्य वरशोधनार्थं स्वपतिं विज्ञापयामास. प्रकृत्यैव विरक्तो गुरुरमरदासः सर्वमिदं भगवदायत्तं. स च कृत्स्नस्य जगतः स्थितिं कुर्वन् मम कन्यायाः कृते वरमप्यानेष्यति. अस्तु. कीदृशस्ते जामाता रोचत इत्यपृच्छत्. सा तु पत्युर्योग्यतां जानन्ती यादृशोऽयं रामदासो वर्तते तादृश एव सुरूपो विनयी जामाता मेऽभीष्ट इति प्रत्युवाच. गुरुरमरदासः स एव मे रोचत इति कुतो न स्पष्टं वदसीति वदन् सर्वं रामदासस्य वृत्तं तां न्यवेदयत्. सा च तद्वृत्तं निशम्य सन्तुष्टा तं जामातरं विधातुमन्वमोदत.

अचिरादेव शुभे समये सोऽयममरदासस्तं रामदासं स्वकन्यापतिं चक्रे. तदानीं च सर्वेऽपि मिलिताः शिष्यास्तन्मिथुनं सर्वगुणैः समं वीक्ष्य परममोदन्त. रामदासश्चेदानीं जामाता नाम भूत्वाऽपि शिष्यत्वं न तत्याज. स चाधिकं मनसा तममरदासं सेवमानस्तस्याधिकां प्रीतिं संपादयामास.

( २ )

एकदाऽतिनिर्मलाकाशसागरान्तःस्पष्टदृश्यमानतारामौक्तिकगणे, नातिप्रखररविकिरणधवलितसकलदिग्गणे, हंसमिथुनालंकृतनदीतटे, प्रफुल्लकाशकुसुमभासुरतडागतीरे, कर्णिकापुष्प-

गुच्छमनोहारिणि, अतिविमलज्योत्स्नाह्वये शरत्समयेऽतिरम-
णीयज्योत्स्नारूपेण सकलचैतन्यमये जगतीतले गुरुरमरदासः
स्वभवनस्य पुरस्तात् कतिपयशिष्यगणैस्तथा जामात्रा रामदासेन
समं किमपि किमपि संलपन्नतिष्ठत्. तदानीं गुरुरमरदासः
सर्वानपि शिष्यान् प्रति जगाद. शिष्याः! अत्र देहली स्यात्तदो-
पवेशनार्थं सम्यग्भवेत्. यतोऽगणे स्थितं मां वृद्धं पिपीलिकादयः
कीटाः पादयोर्दशन्ति. इति.

ते च शिष्या इमामेव गुर्वाज्ञां मन्यमाना द्वितीयदिने
एव महतीं देहलीं व्यरचयन्, परन्तु सायंकाले तेनामरदासेन
वीक्षिता सा तस्मै नारोचत. पुनश्च तैः सप्तकृत्वः सपरिश्रमं
निबद्धाऽपि सा देहली यदा गुरोर्मनसोऽनुरूपा नाभूत्तदा ते
शिष्याः स्वगुरुं वार्धक्यस्खलितबुद्धिं मन्यमानास्तस्माद्देहली-
निर्माणव्यापारादुपारमन्.

रामदासस्तु स्वगुरोः सन्तोषमेव फलं मन्यमानस्तावत्कालं
देहलीनिर्माणार्थं प्रयत्नविधाने जातनिश्चयो रात्रिंदिवं तथैव
प्रायतत. गुरुरमरदासोऽपि तेन निर्मितां देहलीं भूयो भूयोऽस-
मीचीनामवदत्.

एकदा निशि सर्वेषु जनेषु निद्राधीनेषु चन्द्रिकाधवलिते
सकले जगतीतले गुरुरमरदास एकाकी बहिरागतस्तं रामदासं
देहलीनिर्माणासक्तमपश्यत्. स चाविज्ञातगुर्वागमनो मुखेन
भगवतो नामानि घोषयन् हस्ताभ्यां देहलीं व्यरचयत्. गुरु-
रमरदासस्तु तस्य निरुपमां गुरुभक्तिमवलोक्य सन्तुष्टस्तमवदत्–
वत्स! रामदास! यथाऽन्ये शिष्या अस्माद्देहलीनिर्माणव्यव-

सायान्निवृत्तास्तथा त्वं कुतो न? त्वयाऽपि निर्मितासु सर्वास्वपि देहलीष्वेकाऽपि न मेऽरोचत तदा सम्प्रति प्रयासेन किमिति.

स तु रामदासस्तदैकतानमना अकस्मादागतं तं स्वगुरुमवलोक्य विस्मितः प्रत्यवदत्—गुरो! मम तु परमं प्रयोजनं त्वदाज्ञापालनं, न देहलीनिर्माणं. यावत्पर्यन्तं त्वमेव न संतोषं प्रदर्शयिष्यसि तावत्केवलं देहलीनिर्माण एव ममाधिकारः. गुरुपादानां निष्कामत्वेन सेवाविधान एव शिष्यस्याधिकारः. फलदाने तु गुरुपादा एव प्रभवन्तीति.

गुरुरमरदासस्तस्येदं भाषणं निशम्य सन्तुष्टः प्रभात एव सकलान् स्वशिष्यानाहूय सर्वं वृत्तं निवेद्य तं रामदासं स्वस्य पश्चाद्गुरुपीठाधीशमकरोत्. रामदासस्तु लब्ध्वाऽपि गुरुपीठं सततं स्वगुरुमेवासेवत.

(३)

एवंरीत्या यदा गुरुपीठं श्रीरामदास आरुरोह तदानीं सर्वेऽपि राजानस्तथा परमधनाढ्या जना नूतनगुरुदर्शनार्थममरदासनिवासमागच्छन्. सर्वे च शीखधर्मानुयायिनः स्वस्वयोग्यतानुरूपं नानाविधानि महार्घाणि वस्तूनि गुरव उपायनत्वेनादुः. दिल्लीश्वरोऽपि स्वयमागत्य तममरदासं प्रणिपत्य नूतनं शीखधर्मगुरुं रामदासमभिननन्द. सम्राट् दिल्लीश्वरः श्रीरामदासस्य तेजस्विनीं मुद्रां तथा निर्विशेषां गुरुभक्तिं वीक्ष्य सन्तुष्टस्तं व्यज्ञापयत्. साधुश्रेष्ठ! नास्त्युपायनं मम सन्निधौ यत्तुभ्यं देयं. यद्यप्यहमस्मि अस्य समस्तभारतस्य सम्राट् तथापि त्रैलोक्यपालकस्य तवापेक्षयाहं क्षुद्र एव. समस्तोत्तरार्यावर्ते

प्राचीनमेकं तीर्थमस्ति. तदधुना जीर्णप्रायं सर्वतः प्रवृद्धैर्वृक्षगणैः समाच्छादितं नष्टकल्पमेव. तस्योद्धारे यदि तव मतिः स्यात्तदाऽहं यत्किंचित्साहाय्यं करिष्यामि. इति.

दूरदर्शी गुरू रामदास इदं तस्य दिल्लीश्वरस्य भाषणं निशम्य सन्तुष्टस्तत्स्थलं स्वयं वीक्ष्य स्वीचक्रे तदभ्यर्थनां. स तु तत्र स्वगुरोर्नाम्ना विख्यातं नूतनमेव स्वधर्मस्य क्षेत्रं निर्मातव्यमिति मेने. स्वशिष्येभ्यस्तथाऽकथयच्च. अचिरादेव सर्वत्र वर्तमानाः शीखधर्मानुयायिनः समन्ततः समागता अगणितां संपदं व्यतरन्. शिल्पिनश्च नानादेशेभ्यः समानीता रात्रिंदिवं स्वकर्माकुर्वन्. कतिपयमासैस्तस्मिन्नरण्यमये स्थले सुन्दरं नगरं तथाऽतिरमणीयदेवालयभासुरं सरोऽपि बभूव. वाचकाः! इदमेव तदधुनाऽप्युत्तरार्यावर्ते प्रसिद्धं दर्शनीयममृतसरं नाम नगरं. गुरू रामदासस्तस्य नगरस्य नाम स्वगुरुनामांकितं विधातुं परमैच्छत् परन्तु वृद्धो निस्पृहश्चामरदासः प्रथममेव तस्य नगरस्य 'रामदासपुरं' नामाकरोत्. दिवंगते गुरावमरदासे गुरू रामदासस्तस्य नगरस्य नाम स्वेच्छानुरूपं 'अमृतसरं' नामाकरोत्.

गुरू रामदासो यथा खलु विनयी गुरुभक्तितत्पर आसीत्तथैव परं निस्पृहोऽपि. अद्यावधि ये खल्वस्मिञ्जगतीतले साधवोऽथवा लोकोत्तरा मानवपुंगवा जातास्तेषामलौकिके यशसि प्राधान्येनायमेव गुण इति सर्वेऽपि जानन्ति. युक्तं चेदं. कथमन्यथा स्वस्वोदरपर्याप्तान्नलाभार्थं प्रयतमानानामपि नो यशो भवेत् ? अस्तु.

एकदा कश्चन धनाढ्यः श्रेष्ठी शीखधर्मानुयायी स्वगुरोर्दर्शनार्थमागतस्तं गुरुं रामदासं वीक्ष्य सन्तुष्टो महामूल्यं मुक्ताहारं तस्मा उपायनीचकार. गुरू रामदासोऽपि तदीयां मनीषां पूरयितुं तं स्वकण्ठेनोद्वहन् क्षणमतिष्ठत्. तस्मिन्नेव समये तत्र दारिद्र्यव्याकुलो, जीर्णपटच्छेदैः कथमपि आच्छादितशरीरः, दीनो भिक्षार्थी समायातः. स तु तत्रागत्य तं शीखधर्मगुरुं तथा तदनुयायिनः प्रति किमप्ययाचत. ते तु स्वल्पं द्रव्यं वितीर्य तं गमनायावदन् परन्तु स भिक्षुकस्ततो नागच्छत्. गुरू रामदासस्तु तदीयां दीनां मुद्रामवलोक्य संजातदयः स्वकण्ठात्तं मुक्ताहारं निष्कास्य तस्य याचकस्य कण्ठे निवेश्य तमवदत्—इदं तावत्पर्याप्तं द्रव्यं न वा ? इमं मुक्ताहारं विक्रीय लब्धेन द्रव्येण व्यवहरन् योगक्षेमं कुरु. न पुनरप्येवं कमपि याचेति. स तु भिक्षुको महामूल्यं तं मुक्ताहारं लब्ध्वाऽऽत्मानं कृतकृत्यं मन्यमानः स्वीकृत्य गुरुवचनं स्वनिवासमाजगाम. स तु धनाढ्यः श्रेष्ठी स्वोपहारं मुक्ताहारं क्षुद्राय भिक्षुकाय गुरुणा प्रदत्तमवलोक्य खिन्नः स्वमुखं मलिनमधःकृत्वाऽतिष्ठत्.

परमचतुरो गुरू रामदासस्तस्य श्रेष्ठिनः शिष्यस्यान्तःकरणं कलुषं मन्यमानः सहासमवदत्—शिष्यवर ! किमिति खिन्न इव संवृत्तोऽसि. अहं तु मन्ये तस्मै भिक्षुकाय वितीर्णं त्वद्दत्तं मुक्ताहारमवलोक्येदृशी ते चित्तवृत्तिः संवृत्तेति. क्षणमात्रं यदि त्वं विचारयसि तदा त्वमेव मामदोषं गणयिष्यसि. अयं मुक्ताहारो यथा त्वया मह्यं भिक्षवे प्रदत्तस्तथैव लब्धस्वामित्वेन मयाऽन्यस्मै भिक्षुकाय प्रदत्त इत्यत्र को वा दोषः ? यथा हि त्वयाऽपि

कुतश्चिन्मानवात्संपादितोऽयं हारस्तथैव मत्तोऽपि तेन नीत इति किमत्र शोकस्य कारणं. यथा हि प्रथममयं हारः समुद्रादुद्धृतस्तदाऽपि समुद्रो नाशोचत तथैवाग्निमैरपि तस्य संपादकैः शोको न कर्तव्य एव. इमे विषया गमनागमनशीला विविधजनानां समीप आगच्छन्ति गच्छन्ति च. मानवास्तु तेषामिमं स्वभावं जानन्तोऽपि वासनाजालेन मोमुह्यमानाः पुनःपुनस्तानात्मीयान् मन्यन्ते. तद्वियोगेन दुःखाकुला भवन्ति. वत्स ! यदि त्वया मह्यमेष दत्तस्तदा मया प्रदत्ते वा विनाशिते वास्मिन् कस्तव शोकस्यावसरः. यथा हि वृक्षे प्रतिवर्षं पुष्पाणि फलानि चागच्छन्ति, यथा वा नदीतरंगास्तीरवृक्षाणां पुरतो धावन्ति तथैवेमे विषयाः. ये खलु मानवास्तानात्मीयान् मन्यन्ते ते तदागमेन तुष्यन्ति वियोगेन दुःखायन्ते. ये तु तीरस्थवृक्षवदात्मानमुदासीनं भावयन्ति ते न हृष्यन्ति नापि शोचन्ते. वत्स ! त एव मानवश्रेष्ठास्त एव तत्वविदः. त एव गुरुपदभाजः. ये तु विषयतृष्णया प्रतिक्षणं मुह्यन्ति तेषां तथा कीटानां च को वा विशेषः ? तस्माच्छीखधर्मानुयायी नाम भूत्वा क्षुद्रं विषयमोहं धारयसि ! शीखधर्मस्य चेदं प्रधानं तत्वं यत्-स्वयमौदासीन्येन संसारे वर्तित्वा यथाशक्ति परेषां दुःखानि न्यूनीकर्तुं प्रयतनीयमिति त्वमपि जानासि. तदित आरभ्य यथाशक्ति विषयमोहदूरीकरणाय यतस्व. अनेनैव मार्गेण गच्छंस्त्वं सुखी स्या नेतरथेति.

स तु श्रेष्ठी तदीयमिदं भाषणममृतमिव पर्याप्तमाकर्ण्य सन्तुष्टः किमपि न प्रत्युवाच.

( ४ )

वृद्धो गुरुरमरदासः स्वस्थाने स्वप्रतिमं गुरुं रामदासं स्थापयित्वा निश्चिन्तः सर्वं कालमीश्वरसेवायामयापयत्. गुरू रामदासस्तथा तदीया पत्नी भानुमती तं परमसेवेताम्.

एकदा स्नानार्थं स्वपितरं गुरुममरदासं काष्ठमये मंचके स्थापयित्वोष्णोदकेन तदीया कन्या भानुमती तमस्नापयत्. वृद्धोऽमरदासस्तस्मिन् मंचके स्थित्वा स्नातुमारभत. तस्मिन्नेव क्षणे तस्य मंचकस्यैकः पादो बभञ्ज. भानुमती तं पादं भग्नमवलोक्य पितुःपतनमुत्प्रेक्षमाणा स्वीयं चरणं तत्र निवेश्य तं मंचकं तथैवास्थापयत्. ततश्च यथाविधि स्नात्वा भुवमवतीर्णोऽमरदासः स्वकन्यायाश्चरणं रुधिरपंकिलं विलोक्य विस्मितस्तन्मुखात्तत्कारणं विज्ञाय विस्मितो जगाद. वत्से ! सत्यमेव त्वया महत्साहसमनुष्ठितं. तव सेवामकृत्रिमामवलोक्य प्रसन्नोऽस्मि. तत्कथय किं ते प्रियं करोमीति.

सा च भानुमती जात्यैव चतुरा स्वपितरं प्रसादोन्मुखमवलोक्य शनैर्जगाद— तात ! त्वदीयां सेवां विहायान्यत्किमपि मह्यं न रोचते. तथापि यदि तव निर्बन्धस्तदा मदीयेन भर्त्राऽधिष्ठितं गुरुपीठं त्वदीया वंशजा एवाधितिष्ठन्तु नान्य इति अहं वांच्छामीति.

गुरुरमरदासस्तु स्वकन्याया भानुमत्या मुखादीदृशस्य स्वार्थबुद्धिप्रेरितस्य वाक्यस्य निर्गमनासंभवं मन्यमानोऽकस्मादिदं वाक्यं निशम्य शिरसि वज्रेण निहत इव क्षणं मूढ इव तस्थौ. ततश्च दुःखेन तां निजगाद— वत्से ! त्वं हि मम कन्या नाम

भूत्वा क्षुद्रजनवत्स्वार्थबुद्धिं धारयसि ! यथा हि पशवः स्वपुत्रस्य तथा स्वेन्द्रियाणां कल्याणमिच्छन्ति, यथा वा स्वार्थान्धाः स्वकीयस्यैव शुभमिच्छन्ति तथैव त्वया भवितव्यमिति महच्छोकास्पदम्. उदारा मानवाः सर्वदा स्वार्थबुद्धिं विहाय परोपकाररता एव भवन्ति. तैरेव मानवरत्नैरयं संसारः प्रचलति. ये स्वार्थपरा मानवाधमास्ते सर्वदेमं नाशयितुमेवेच्छन्ति. तत्कथं त्वमपि तेषामेवान्यतमा नाम भूत्वा मां दुःखभाजमकरोः. विशेषतश्चेदं धर्मपीठं केवलं शिष्यप्रदत्तैरुपायनद्रव्यैर्विषयसुखोपभोगार्थं गुरुराजेन नानकदेवेन न स्थापितं. यथा हि राजा प्रजादत्तैः करद्रव्यैः सततं विषयसुखानि भुंक्ते प्रजासुखलालसामपि मनसि न करोति तथैव यदि धर्मगुरुः कुर्यात्तदाऽनाथा इमे जनाः कं शरणं गच्छन्तु. दुर्वृत्तैर्नृपैः संत्रासिताः प्रजाजना ईश्वरे स्वरक्षणभारं निधाय कथमपि जीवन्ति. सेयमीश्वरास्तित्वभावना धर्मपीठाध्यक्षैर्गुरुभिरेव संरक्षणीया. यद्ययोग्याः पुरुषाः केवलं वंशजत्वेन धर्मपीठमारोहेयुस्तदा स्वयं विषयसुखमग्ना ईश्वरास्तित्वमनंगीकुर्वन्तः कथं परेषामीश्वरास्तित्वभावनां रक्षेयुः ? कन्ये ! य एव प्रजाहितदक्षः स एव राजा भवितुं यथाऽर्हति, तथैव यः शिष्यकल्याणदक्षः स एव गुरुर्भवितुमर्हति. तत्र कृत्रिमस्य मर्त्यस्य शरीरजन्यत्वस्य कुतः कारणत्वं ? त्वं हि नानादेशवासिभिः शीखधर्मानुसारिभिः शिष्यगणैरानीतान्युपायनद्रव्याणि वीक्ष्य लोभाकुलेत्थमयाचः. परन्तु सकलमिदमैश्वर्यं तस्य भगवतो नानकदेवस्य निस्पृहतागुणेन संपादितं, अद्यावधि अस्माभिश्च तेनैव गुणेन रक्षितमिति न जानासि. यावत्कालमयं

गुणोऽस्मिन् धर्मपीठे स्यात्तावत्कालमेव शिष्या उपायनान्याहरेयुः. यदा चायं नश्येत्तदा हालिकोऽप्यागत्य क्षुद्रां वराटिकामपि न दद्यादिति सत्यं जानीहि.

अपि च लोककल्याणार्थमवतीर्णैर्धर्मगुरुभिरेव यदि लोभः क्रियते तदा सांसारिकैः किं वा कर्तव्यं ? धर्मपीठानि तु अतिलुब्धानां परस्परं कलहायमानानां सांसारिकाणां जनानां लोभं न्यूनीकृत्य तान्सुपथे स्थापयितुमेव स्थापितानि. एवं सति यदि तान्येव लोभाकुलानि स्युस्तदा जगत्यान्ध्यमेव भवेत्. अस्तु. का गतिः. अहं च दत्तवचनोऽस्मि. परन्तु इदं त्वदीयमभिलषितं न चिरं तिष्ठेत्. अचिरादेव परस्परं कलहायमानास्त्वदीया वंशजा एव महद्दुःखं लभेरन्. अयं हि श्रीनानकदेवेन स्थापितो धर्मः क्रमेण वर्धमानश्चिरं जीवेदेव. परन्तु त्वदीया वंशजाः सुखभाजो न भवेयुरिति.

गुरू रामदासस्तु इमां स्वगुरोरमरदासस्य वाणीं तथा स्वपत्न्या भानुमत्या याचनां निशम्य खिन्नो गुर्वाज्ञापरवशोऽपि शुभलक्षणान्वितं स्वीयं द्वितीयं पुत्रं 'अर्जुनसिंह'मेव स्वपीठाधीश्वरमकरोत्.



# गुरुरर्जुनसिंहः

## [ पूर्वभागः ]



( १ )

वाचकाः ! इत आरभ्यैव खलु रमणीयश्चित्ताल्हादकरश्च शीखधर्मस्येतिहासः. यद्यपि प्राचीनाः श्रीगुरुराजनानकदेवप्रभृतयश्चत्वारोऽपि गुरवः सकललोकमान्या अद्वितीया एवाजायन्त तथापि 'शमप्रधानं सात्त्विकं तेजः परैरपकृतं कथं दुःसहं भवति' इति द्योतनायैव खल्वयं प्रबन्धो मया लिखितुमारब्धः. तदेतत्तत्त्वमित एवोत्तरोत्तरमाधिक्येन प्रकटीभविष्यतीति भविष्यतो वृत्तस्य चित्ताल्हादकरत्वं वदामि. अस्तु.

दिवंगते सज्जने गुरौ रामदासे तदाज्ञया शीखधर्मगुरुपीठं गुरुरर्जुनसिंहो नाम तदीयो द्वितीयः पुत्रः समलंचकार. सर्वे च शीखधर्मानुयायिनो जना गुर्वाज्ञापालनमेव स्वकर्तव्यं मन्यमानास्तं स्वगुरुममन्यन्त.

अथ तदीय एव ज्येष्ठो बन्धुः पृथ्वीचन्द्रः स्वाधिकारमेव शीखधर्मपीठाधिरोहणे मन्यमानस्तं परमद्वेट्. स हि मेने-

यथा हि बहुष्वपि राज्ञः पुत्रेषु ज्येष्ठस्यैव पुत्रस्य सिंहासनाधिरोहणाधिकारस्तथैव धर्मपीठेऽपि. एवं सति मामधिकारिणं पीठेऽस्थापयित्वा कनिष्ठोऽयमर्जुनसिंहः पित्रा गुरुरामदासेन यदृच्छया स्थापितः. तद्यथा बलिष्ठो राजपुत्रः स्वज्येष्ठबन्धुमपि हत्वा सिंहासनाधीश्वरो भवति तथैव मया कुतो न कर्तव्यमिति.

सज्जनाः! अयोग्या जना यत्र कुत्रापि नियुक्ता अयोग्या एव. परममान्यस्य गुरुरामदासस्य पुत्रो धर्मपीठलाभार्थं क्षुद्रो रजोगुणप्रधानः क्षत्रिय इव स्वस्य विनाशेनापि प्रायतत. क्व च शमप्रधाना लोककल्याणैकध्येयाः सांसारिकजनदुःखपरिहारदक्षाः श्रीनानकदेवप्रभृतयः साधुवराः, क्व च तदीया एवाप्रेतना वंशजाः. तस्मात्कदापि मानवेन जडदेहसंबंधं मूलीकृत्य स्वसंतानेषु मोहो न करणीयः. यश्च सज्जनः स एव सज्जनो न तु सज्जनस्य पुत्र इति कोऽपि सज्जनो भवति. अस्तु.

तं च पृथ्वीचन्द्रं गुरुपीठलाभार्थं प्रयतमानं वीक्ष्य केचन कुमतयः शिष्या असाहाय्ययन्. ते हि- अद्यावधि खल्विदं पीठं योग्याय शिष्यायैव प्रदत्तं तैस्तैर्गुरुभिः. परन्तु गुरुणा रामदासेन तु स्वपुत्रायैव प्रदत्तं. आनुवंशिकत्वेन प्रचालयितुमाज्ञप्तं च. तथा चेदमपरं राजसिंहासनं ज्येष्ठेनैव सेवनीयं. न तत्र कनीयसोऽधिकारः. अर्जुनसिंहोऽपि न योग्य इति गुरुर्बभूव किंतु गुरुपुत्र इति. तथा च तत्र पृथ्वीचन्द्रस्यैव प्राधान्येनास्ति अधिकार इति मेनिरे.

एवं द्विधाभूतेऽपि शीखधर्मानुयायिसमूहे मान्या जना गुरु-

मर्जुनसिंहमेव स्वगुरुममन्यन्त. सोऽपि च प्रकृत्यैव विवेकी चतुरो वर्धमानं महंमदीयवंशसागरं तथा तदीयं धर्मं च वीक्ष्य स्वधर्मरक्षणार्थं कृतनिश्चयः शनैः शनै रात्रिंदिवं स्वधर्मस्य रक्षणाय तथा वर्धनायोपायांश्चिन्तयामास.

( २ )

गुरुरर्जुनसिंहो गुरुपीठमारुह्य प्रथमतो जनपरिस्थितिमवलोकयामास. तदानीं च वर्धमानं शीखधर्मानुयायिनां समूहमवलोक्य सर्वेऽपि महंमदीयधर्मानुयायिनो निभृतं तानद्विषन्. तदानीं च महंमदीयधर्मस्य राजधर्मत्वादचिरादेव तेभ्यः स्वधर्मप्रतिघातं भाविनमाशंकमानो गुरुरर्जुनसिंहः स्वधर्मपथं दृढीकर्तुमियेष.

किंच— सर्वत्रोत्तरार्यावर्ते श्रीनानकदेवस्य कीर्तिस्तोममवलोक्य क्षुद्रा अपि सामान्यतो ज्ञातग्रंथतत्त्वा अनुभवविहीना जना अपि स्वयं कानिचित्पद्यानि निर्माय श्रीगुरुराजप्रणीते ग्रंथे निक्षिप्य तत्प्रणीतानीमानि पद्यानीत्यवदन्. तेन साधारणा जना गुरुनानकदेवेन प्रणीतेषु ग्रंथेषु समदिह्यत. तमिमं संशयं निराचिकीर्षुर्गुरुरर्जुनसिंहः स्वधर्मानुयायिनां महतीं सभां विधाय तत्रेमामापदं कथयित्वा तज्ज्ञैः कृत्स्नमपि श्रीगुरुराजनानकप्रभृतिभिः प्राचीनैर्गुरुभिः कृतं वाङ्मयमेकत्रीकृत्य अलेखयत्. लिखित्वा च तस्य प्रसारार्थं स्थाने स्थाने स्वशिष्यानशात्.

एवं स्वधर्मग्रंथं निश्चलीकृत्य गुरुरर्जुनसिंहो मनसि भूयो व्यचिन्तयत्-यथा हि सनातनधर्मस्य परमपवित्रं काशीक्षेत्रं, यथा वा महंमदीयानां मक्कानगरं, तथैव शीखधर्मस्य किमपि क्षेत्रमा-

वश्यकं. यद्यप्यधुनाऽपि तानि श्रीगुरुराजनानकदेवप्रभृतीनां गुरूणां जन्मस्थानानि तीर्थान्येव मन्यमानाः सर्वेऽपि शीखधर्मानुयायिनस्तानि परमादरयन्ति तथापि तथाविधमेकमेव क्षेत्रमपेक्षितं यत्र सर्वेषां चित्तानि ऐक्यभावं लप्स्यन्त इति.

एवं विचार्य पुनरपि सर्वेषां स्वानुयायिनां सभां विधाय स्वमनोरथं तेभ्यो निवेद्य स्वपितृस्थापितेऽमृतसरनगर एव महत्सुवर्णमन्दिरं निर्मातुमारभत. शीखधर्मानुयायिनोऽपि स्वगुरोरभिप्रायं सम्यग्विज्ञाय तस्मै यथेच्छं द्रव्यसाहाय्यं चक्रुः. अचिरादेवानेकैः शिल्पिभिः स्वकुशलमतिप्रभावेण दर्शनीयं सुवर्णमन्दिरं निर्मितम्. वाचकाः! अद्यापि तदिदं सुवर्णमन्दिरममृतसरनगरे विराजमानं शीखधर्मस्य तथा महानुभावश्रीगुरुराजनानकदेवस्य यशो विख्यापयद्विराजते.

एवममृतसरनगरं शीखधर्मक्षेत्रं विधायाऽपि अलब्धस्वास्थ्यः स दूरदर्शी गुरुरर्जुनसिंहो विचारयामास. यद्यपि मूर्तिपूजा प्राप्तभेदा द्वेषाय कल्पते तथापि सकलजनानामेकीकरणाय यथा सा प्रभवति नैवमन्यत्किमपि. एतदभिसंधायैव मूर्तिपूजायाः प्रधानद्वेषकारिभिर्यवनैरपि उपासनामन्दिरनिर्माणकल्पना स्वीकृता. अन्यथा सर्वत्र व्यापकस्येश्वरस्य किमर्थं परिच्छिन्न उपासनामंदिर एवोपासना? मूर्तिपूजा च यथेच्छं कल्पिता कल्पकानां चित्तभेदाद्भिद्यमाना द्वेषाय भवति. सा च यथा न भिद्येतैवं क्रियमाणे न दोषः स्यात्. तत्रापि अमूर्तोपासनापेक्षया मूर्तोपासनैव लौकिकदृष्ट्या परं श्रेयस्करीति ऐतिहासिकवृत्तपर्यालोचनयाऽवगम्यते. तदधुना सर्वेषां शीखध-

र्मानुयायिनामैकमत्याय काचन सर्वेषां प्रिया मूर्तिः कल्पनीयैव. अस्मिन्हि शीखधर्मे नास्ति गुरुवचनादन्यात्किमपि प्रियं श्रेष्ठं प्रमाणं च. तद्यदि श्रीनानकदेवप्रभृतीनामाद्यानां गुरूणां वचनान्येवैकत्रीकृतानि मूर्तिवत्परिपूज्यन्ते तदा समीचीनं स्यादिति.

शीघ्रमेव पुनरपि स्वानुयायिनां महतीं सभां विधाय सर्वानुमत्या तं 'ग्रंथसाहेब'-नामानं श्रेष्ठं ग्रंथं तस्मिन् सुवर्णमन्दिरे मूर्तिवत्स्थापयित्वा परिपूजयामास.

वाचकाः ! स दूरदर्शी गुरुरर्जुनसिंह एवंरीत्या स्वधर्मानुयायिनामेकत्रीकरणाय प्रयतमानः परमचातुर्येण तस्य शीखधर्मस्य मूर्तं तीर्थं तदमृतसरनगरं विधाय तत्र स्वयमागत्यावसत्.

( ३ )

तस्मिन् गुरावर्जुनसिंहेऽमृतसरनगरमधिवसति सति सर्वेऽपि शीखधर्मानुयायिनः श्रेष्ठा जनास्तत्रैव समागत्य न्यवसन्. तेनाचिरादेव तन्नगरं महान्तमुत्कर्षमभजत.

गुरुरर्जुनसिंह एवं व्यवस्थाप्याऽपि एकं स्खलनमलभत. तदिदं. श्रीनानकदेवः शिष्यैरुपायनीकृतं कृत्स्नमपि द्रव्यं दीनपीडापरिहाराय सज्जनेभ्योऽदात्. तच्छिष्यश्च गुरुरंगदस्तद्व्यय-व्यवस्थार्थं दानगृहाण्यस्थापयत्. परन्तु तत्रापि नियुक्ता मानवा लोभाकुला द्रव्यापहारमारभन्त. अथ शिष्यगणा अपि अनियतं किमपि प्रयच्छन्तो दीनान् पीडापरिहाराय कथमप्यसाहाय्ययन्. इमां च दुरवस्थां दानगृहाणामवलोक्य दुःखाकुलः सोऽर्जुनसिंहस्तद्व्यवस्थार्थं कृतनिश्चयः पुनरपि यात्रार्थं समागतानां शीख-

धर्मानुयायिनां महतीं सभामकरोत्. अवदच्च सर्वान्—शिष्याः! यथा हि लौकिकसुखसंपादनाय लौकिकं स्वास्थ्यं सर्वैरप्यपेक्ष्यते तथैवालौकिकसुखसंपादनायापि धर्मरक्षाऽवश्यं कर्तव्यैव. धर्मो यथा पारलौकिकं सुखं ददान ऐहिकसुखदानेऽपि प्रभवति नैवमन्यत्किमपि. न खलु न सर्वेऽपि जना अलौकिकं सुखं कामयन्ते. तस्मादस्माभिः सर्वैरपि धर्मरक्षणार्थमवश्यं प्रयतनीयम्. लौकिकस्वास्थ्यार्थं यथा राजाऽपेक्ष्यते तथैव धर्मरक्षार्थं गुरुरप्यपेक्षणीय एव. स हि अधार्मिकान् दण्डयति यथा राजा. एवं च लौकिकस्वास्थ्यकारिणी राजसत्तेव धर्मरक्षार्थं गुरुसत्ताऽप्यवश्यं स्वीकार्या. तदर्थं च यथा राज्ञे कररूपेण नियतं द्रव्यं दीयते तथैव धर्मगुरवेऽपि द्रव्यं देयमेव. यथा हि राजा तद्द्रव्यव्ययेन दुष्टान् दण्डयंल्लौकिकं स्वास्थ्यं रक्षति तथैव धर्मगुरुरपि कुमार्गगामिनो दण्डयन् धर्मपथान् रक्षेत्. तस्मादित ऊर्ध्वं शीखधर्मरक्षार्थं युष्माभिर्नियतं द्रव्यं कररूपेण देयमेव. एवं सति सुरक्षितोऽयं धर्मो नः सर्वेषामपि मनोरथान् सफलीकुर्यादिति.

सर्वैरपि शीखधर्मानुयायिभिः स्वीकृतेऽस्मिन् गुरुनियोगे गुरुरर्जुनसिंहस्तस्यास्य करद्रव्यस्य संपादनार्थं व्ययार्थं च द्वाविंशतूपीठेषु स्वीयानुत्तमानधिकारिणो नियोजयामास. तेऽपि च नियते समये शीखधर्मानुयायिभ्यो धर्मकरद्रव्यं गृहीत्वा तस्मै समर्पयामासुः. तेन गुरुरर्जुनसिंहः स्थाने स्थाने स्वधर्मप्रसारकार्याणि कुर्वाणोऽचिरादेव राजसमः सर्वत्र धर्मं प्रसारयामास.

(४)

एवं सर्वत्र विजयमाने शीखधर्मे तस्य गुरोरर्जुनसिंहस्य निरतिशयमैश्वर्यं तथा लोकादरं कार्यतत्परतां चावलोक्य प्रतिदिनमन्यधर्मीया जना अपि स्वधर्मं त्यक्त्वा शीखधर्मानुयायिनोऽजायन्त. तेन प्रकृत्यैव दुष्टा जनास्तद्वैभवमसहमानास्तमद्विषन्. तेषु पृथ्वीचन्द्रो मुख्य आसीत्. वाचकाः! अयं हि पृथ्वीचन्द्रस्तस्य गुरोरर्जुनसिंहस्य ज्येष्ठः सहोदर एवाऽऽस. सज्जनाः! ये खलु मन्यन्ते शरीरसंबंध एव द्वेषस्य न्यूनीकरणे श्रेष्ठ उपाय इति तैरिदमुदाहरणमवश्यमालोचनीयं. पृथ्वीचन्द्रो हि गुरुमर्जुनसिंहं द्विषंस्तस्य प्राणान् हर्तुं प्रयतमानः परकीयानपि साहाय्यार्थं प्रार्थयामास. पाठकाः! कस्यायं परिणाम ऋते लोभात्. लोभो ह्यतिप्रवृद्धः पितरमपि घातयितुं पुत्रं प्रवर्तयति किं पुनः सोदरान्! जगति अद्यावधि ये खलु पापमयाः प्रसंगा अजायन्त यैश्चेतिहासः परिपूरितस्तेषां मूलमप्ययमेव. तत एव साधवः स्वीयमेव लोभं नाशयित्वा लोभनाशाय परानुपदिशन्ति. अस्तु.

गुरू रामदासः स्वस्य पश्चात्स्वपुत्रेषु गुरुपदलाभाय भविष्यन्तं कलहमुत्प्रेक्ष्य स्वयमेव तं मध्यमं पुत्रमर्जुनसिंहं गुरुपीठाधीश्वरमकरोत्. तत एव पृथ्वीचन्द्रोऽर्जुनसिंहस्य प्राणहरणाय प्रयतमानस्तेनैव पित्रा निवारित उपदिष्टोऽपि न विरराम. स्वयं गुरुरर्जुनसिंहोऽपि तं पितृवदादरयन् सकलेप्सितपूरणार्थं प्रतिज्ञामकरोत्, परन्तु स पापी पृथ्वीचन्द्रो नैव समतुष्यत्. बहवः श्रेष्ठाः शीखधर्मानुयायिनोऽपि तमुपादिशन् परन्तु न ते सफला अभवन्. पृथ्वीचन्द्रो गुरुमर्जुनसिंहमपुत्रं प्रेक्ष्य तस्य पश्चाद्गु-

रूपदलाभमाशासमानः कथं कथमप्यजीवत्. गुरोरर्जुनसिंहस्य प्रथमपत्न्यां दिवं गतायां स गंगादेवीनाम्नीं द्वितीयां पत्नीमकरोत्. साऽपि बहोः कालात् संतानधरं नालभत. एवं वीक्ष्य दुष्टस्य पृथ्वीचन्द्रस्याशा बद्धमूलाऽभूत्. परन्तु सकलचराचरपालकः परमात्मा तस्य नीचस्य मनोरथं सफलीकर्तुमनिच्छुरिव शीघ्रमेव तं गुरुमर्जुनसिंहं सपुत्रमकरोत्. पुत्रो हरगोविन्दः स्वजन्मना सकलानपि शीखधर्मानुगान् सानन्दानकरोत्. पृथ्वीचन्द्रस्तु हरगोविन्दस्य जन्म श्रुत्वा नितान्तमेव संतप्तस्तमेव बालं स्वाशाद्रुमनाशकं मन्यमानो तस्य नाशायाचेष्टत.

एकदा सुखेन संसुप्तं हरगोविन्दं घातयितुकामः स पृथ्वीचन्द्रो विषदिग्धस्तनीं धात्रीमिषेण कांचन वनितां प्रेषयामास. सा तु निभृतं तन्निवासमागता पापभीता शासनभिया च तत्रैव सुप्तं पृथ्वीचन्द्रस्य पुत्रमेव पाययित्वा पलायते स्म. अचिरादेव स पृथ्वीचन्द्रस्य पुत्रः स्वप्राणानजहात्. तं च मृतमवलोक्यातिखिन्नः पृथ्वीचन्द्रः परं द्वेषाकुलोऽभून्. सर्वेऽपि शिष्यगणाः स्वगुरुपुत्रस्य घातकं तं ज्ञात्वा परं संतप्तास्तममृतसरनगरान्निरवासयन्. सोऽपि ततो निर्गत्याऽपि कूटघातकैस्तं गुरुमर्जुनसिंहं घातयितुं प्रायततैव. परन्तु यशो न लेभे.

## ( उत्तरो विभागः )

१ प्रवृत्तिस्वीकारः.

२ स्वकीयशत्रूद्भवः.

३ राजद्रोहारोपः.

४ दुःखेन देहत्यागः.

(१)

गुरुरर्जुनसिंहः क्रमेणैवं सर्वं व्यवस्थाप्य लब्धस्वास्थ्यो विचारयामास. यथा यथाऽस्माकं धर्मः परिवर्धेत तथा तथा परोत्कर्षासहिष्णव इमे यवना क्षोक्ष्यन्ति. इमे हि धर्मोत्कर्षेण राज्योत्कर्षं मन्यमाना अस्मत् स्वराज्यस्यापायमाशंकमानाः कदाऽपि तूष्णीं न तिष्ठेयुः. बाल्य एवायं धर्मो नाशयितव्य इत्यवश्यं प्रायतेरन्. तदस्माभिः समं तेषां युद्धप्रसंगा आपतेयुरेव. एवं चेत आरभ्यैवास्माभिरागामिष्यन्तीनामापदां वारणाय प्रयत्नः करणीयः. सर्वस्याप्यनर्थजातस्य परीहारे यथा द्रव्यं कारणं न तथा किमप्यन्यत्. सति द्रव्ये सर्वाणि साधनानि सुलभानि. तद् द्रव्यसंपादनायावश्यं प्रयतनीयम्.

यद्यपि श्रीनानकदेवप्रभृतयः सर्वेऽपि प्राचीना गुरुवो मोक्षप्राप्तिमेव स्वध्येयं मन्यमाना अत्यन्तं विरक्ता आसन, तथापि अधुना तादृशेन वैराग्येण लाभो न भविता. यत्र हि पारलौकिकश्रेयःफलकस्यापि धर्मस्य नाशायान्ये जनाः प्रयतन्ते तत्र तादृशधर्मरक्षणार्थं क्षणमात्रं वैराग्यं विधूय प्रवृत्तिपरेण नरेण भवितव्यम्. यथा हि महार्घस्याम्रवृक्षस्य रक्षणाय कंटकाः स्थाप्यन्ते ते हि श्वापदेभ्यस्तं परिरक्षन्ति तथैव पारलौकिकफलानुरागिणाऽपि जनेन तादृशधर्मपालनार्थं प्रवृत्तिः स्वीकार्यैव. यस्मिन् समये देशे च नानाविधा दुर्बला जना बलाढ्यैर्दुर्जनैः पीड्यन्ते, साधवश्च तृणवद्घात्यन्ते, यत्र चाबला दैत्यैरिव मदोन्मत्तैः पशुवत् बलात्क्रियन्ते. अगणिता जना 'अन्नमन्नमितिवादिनः प्राणान्मुंचन्ति, तदा पारलौकिकफलं धर्मं कोवाऽन्वसरेत्?

लौकिकस्वास्थ्यं लब्ध्वैव पारलौकिकश्रेयोलाभाय प्रयतन्ते जना नान्यथेति सार्वजनीनं. तस्मात्प्रथमतो लौकिकस्वास्थ्यलाभाय प्रयत्नः करणीयः. यदि च लौकिकस्वास्थ्यमेवोररीकृत्य प्रवृत्तिस्तदाऽनर्थः. परन्तु पारलौकिकं श्रेयः स्वीकृत्य तत्साधनत्वेन लौकिकस्वास्थ्यलाभाय प्रयत्यते चेन्न कापि हानिः. इमे महंमदीया लौकिकस्वास्थ्यमेवान्तिमं ध्येयं मन्यमानास्तत्सिद्ध्यर्थं दीनान् परिपीडयन्ति. इमे हि कृत्स्नं भारतवर्षमाक्रम्य सर्वां सम्पदं हरन्तो दुर्लभान्नान् दीनान् भारतवासिनः स्वधर्मानुयायिनो विधाय स्वदासान्विरचयन्ति. तेन यथा लौकिकस्वास्थ्यस्य हानिः संभवत्येवमेव धर्मस्याऽपि. तस्माद्धर्मरक्षणार्थमवतीर्णैर्धर्मगुरुभिर्यथा शिष्येभ्यो धर्मः कथनीय, एवमेव लौकिकस्वास्थ्यसंपादनमार्गोऽपि. लौकिकस्वास्थ्यसंपन्नाः शिष्या विपदि स्वगुरुं रक्षितुं समर्था भवन्ति. असमर्था विरक्ताः शिष्याः स्वात्मानमेव रक्षितुमसमर्थाः कथं स्वगुरुं रक्षितुमलंभवेयुः! तस्मादागामिन्या अस्या विपदः परीहारार्थं प्रवृत्तिस्वीकार आवश्यकः.

किंच– यथा सशस्त्रैः सैनिकगणैरनन्वितो राजा न शोभते, क्षुद्रेणाऽपि जनेन सोऽभिभूयते, स्वात्मानमेव रक्षितुमसमर्थो भवति; तथैव प्रवृत्तिं विना निवृत्तिरपि. सा च निवृत्तिर्मनसः स्वास्थ्यमुत्पादयितुमक्षमा क्लेशायैव भवति. यद्यपि प्रवृत्तिः केवलं विषमिवानर्थाय, तथापि निवृत्तिसाधनत्वेनोपास्यमाना विषमयमौपधमिव महते श्रेयसे कल्पते. केवलवैराग्यावलंबनेऽन्नलाभाय परमुखं वीक्षमाणः कथमादृतो भवेदिति.

विचार्य चैवं गुरुरर्जुनसिंहः सर्वानपि शिष्यानुद्यमार्थं

प्रोत्साहयामास. स्वयमपि व्यवहारकुशलान् सहायान् स्वसमीपे निधाय व्यवहारमकरोत्. अमृतसरनगरे च व्यवहारकुशलान् धनाढ्यान् स्वधर्मानुयायिनः समाहूय निवासयामास. ते च शीघ्रमेव तन्नगरं स्वव्यवहारदाक्षिण्येन कुबेरराजधानीमकुर्वन्. सर्वतश्च स्वस्वव्यवहारकारिणो नियते समये परमात्मानमुपासमानान् स्वधर्मानुगान् वीक्ष्य भृशमतुष्यत्. स तु गुरुरर्जुनसिंहः परदेशादुत्तमानश्वानानीय तेषां क्रयविक्रयव्यवहारमकरोत्. शीखजनसमूहोऽपि स्वगुरौ परं विश्वस्तस्तं प्रवृत्तिपरमवेक्ष्य न विषिस्मिये.

( २ )

एवं प्रवृत्तिमार्गस्वीकारेण प्रतिदिनं वर्धमानवैभवं शीखधर्मानुयायिनां गणमवलोक्य सर्वेऽपि महंमदीयाः परं विस्मिता निभृतं तानद्विषन्. तदानींतना महंमदीया भारतवासिनः सर्वानपि जितान् दासान् मन्यमानास्तेषामुत्कर्षेण स्वहानिममन्यन्त. दिल्लीश्वरोऽपि तथैव मन्यमानः क्रमेण दुष्टैः सूचकैः शीखधर्मद्वेषिभिः कलुषितान्तःकरणोऽभूत्. गुरुरर्जुनसिंहस्तु सर्वमिदं जानन्नपि न स्वोद्यमाद्विरराम.

एकदोत्तरार्यावर्तपालनार्थं दिल्लीश्वरेण नियुक्तो राजपुरुषश्चन्दुलालनामा श्रुतार्जुनसिंहकीर्तिस्तं द्रष्टुमाजगाम. यद्यप्ययं चन्दुलालः समीचीनकुलजन्मा तथापि स मनसा नीच एवासीत्. तदानींतनान् दिल्लीश्वरराजसभापुरुषान् येन केनाप्युपायेन स्वानुकूलान्विधाय स उत्तरार्यावर्तस्य पालकत्वमलभत. लब्ध्वा च तत् कुमार्गैः प्रभूतं धनं संपाद्यात्मानं धनाढ्यं मन्यमानः

शक्रादपि श्रेष्ठमात्मानममंस्त. तत्रत्याः सर्वेऽपि जना राजपुरुषत्वेन प्रकटं तिरस्कर्तुमसमर्था अपि निभृतं तमद्विषन्.

गुरुरर्जुनसिंहश्च तमागच्छन्तं निशम्य शंकाकुलोऽपि स्वागतं चक्रे. सोऽपि नमस्कारादिभिर्गुरुमर्जुनसिंहमादृत्य वार्तालापं कुर्वन्नतिष्ठत्. अत्रान्तरेऽकस्माद्गुरोः पुत्रो हरगोविन्द उभयतोबद्धखड्गाभ्यामलंकृतस्तत्रैवागच्छत्. तं च दर्शनीयाकृतिं मधुरभाषिणं तेजस्विनं बालं वीक्ष्य सन्तुष्टः स चन्दुलालो लीलयैव तमपृच्छत्—वत्स ! हरगोविन्द ! अस्य खड्गद्वयस्य किं प्रयोजनमिति. स तु निर्भयः—एकेन खड्गेन शीखधर्मरिपून्निराकरिष्यामि, परेण च मदीयान्तःकरणवासिनः षड्रिपून्. यो हि अनिराकृतकामक्रोधादिर्यश्च शीखधर्मरिपूणां निराकरणेऽसमर्थः स कथमेतद्गुरुपदमारोढुं शक्नुयादिति जगाद. स तु तस्य बालस्येदमोजस्वि भाषणं निशम्य विस्मितोऽभवत्. तत्रस्थाः सर्वेऽपि शीखधर्मानुयायिनो भाविनः स्वगुरोरिदं वचः श्रुत्वाऽऽनन्दसागरे न्यमज्जन.

अथ चन्दुलालः स्वगृहमागतस्तमेव हरगोविन्दं स्वकन्यापाणिग्रहार्हं मन्यमानो द्वितीयदिने स्वयमागत्य गुरुमर्जुनसिंहं तथा व्यज्ञापयत्. सोऽपि तत्संबंधं स्वधर्मोत्कर्षकारणं मन्वानो मोदेनान्वमोदत.

ततश्च कतिपयदिवसैर्वरनिश्चयार्थं ज्योतिर्विन्निवेदिते समये गुरोरर्जुनसिंहस्य गृहमागतश्चन्दुलालः क्षुद्रहृदयः स्वोत्कर्षं प्रतिपादयितुमाह. अयं हरगोविन्दो न मम कन्यायाः सदृशः, सा च धनाढ्यस्य राजमान्यस्य मे कन्या, अयं च यद्यपि शीखधर्मगुरोः

पुत्रस्तथापि निर्धन एव ? इह जगति यथा सर्वे जना धनं संमानयन्ति न तथान्यं कमपि पदार्थं. मम भार्या तु मां परं न्यषेधत परन्तु दत्तस्य वचनस्य पालनायैवाहमेवं करोमीति.

मानी गुरुरर्जुनसिंहस्तस्य चन्दुलालस्येदमपमानकारकं भाषणं निशम्य कोपाकुलोऽपि शममास्थाय प्रत्युवाच— राजमान्य ! वयं च न तव कन्यां याचितुमागताः किंतु त्वं स्वयमेव. यदि चास्मान् शरीरसंबंधायोग्यान् भवान् मन्यते तदा वयं नेच्छाम इमं संबंधं विधातुं. यद्यपि वयं धनहीनास्तथापि मानहीना न. वयं च पवित्रे श्रीनानकदेवस्य वंशे समुत्पन्नाः कथं त्वादृशेन क्षुद्रेण विहितमपमानं सहिष्यामहे. यो हि धनमदेन पवित्रं धर्ममपमनुते कथं तेन सह वयं शरीरसंबंधं करिष्यामः. योऽपि जडधनमदान्धनयनः परमपवित्रं वैराग्यधनं न पश्यति स पशुसम एव. न हि मानवः पशुना समं शरीरसंबन्धं विधत्ते. त्वादृशा अधमा जना येन केनापि मार्गेण धनं संपाद्य मदोन्मत्ता भवन्ति तथा न वयं ? वयं च न्यायेन जीवन एव सुखं मन्यमाना दारिद्र्य एव सुखेन निवसामः. त्वं हि त्वत्तुल्यायैव धनाढ्याय कन्यां वितरेति.

स तु चन्दुलाल इत्थं तेन गुरुणाऽर्जुनसिंहेन निर्धूतः परं द्वेषमबध्नात्. तदानीं चोत्तरार्यावर्ते ये खलु क्षत्रियवंशा आसंस्तेषु इयं रीतिः प्रचलिताऽऽसीत्—यदेकत्र दानार्थं निश्चितां कन्यां केनाऽपि कारणेनानंगीकृतां नान्यः पर्यणयत्. तेन स चन्दुलालोऽन्यत्र स्वकन्याविवाहमशक्यं मन्वानः पुनः पुनरन्यमुखेन विज्ञप्याऽपि यशस्वी न बभूव. समये समये च दि-

ल्लीश्वररोषभयमपि तस्मै गुरवेऽर्जुनसिंहाय स प्रादर्शयत्, परन्तु पर्वतवदकम्प्यः स शीखधर्मगुरुरर्जुनसिंहः स्वनिश्चयान्नोपरराम. अवदच्च तं–धनोन्मादमत्त! चन्दुलाल! वयं च केवलं परमात्मन एवालौकिकसामर्थ्याद्बिभीमः. अन्ये च सर्वेऽपि जन्तवस्तत्कृपामासाद्यैव लब्धजीवनाः कथं कथमपि संसारे जीवन्ति. ते च दिल्लीश्वरसदृशा बलाढ्या वा भवन्तु पिपीलिकासदृशाः क्षुद्राः कीटका वा सन्तु. एते चेश्वराज्ञां विना पदात्पदमपि गन्तुं यदि समर्था न भवन्ति तदा मादृशां पीडनाय कथं प्रभवेयुः. यदि चेश्वर एव मां पीडयितुमिच्छेत्तदा कस्तं निवारयेत्. तस्मादीदृशैर्भीतिदर्शकैर्वचनैर्गुरुरर्जुनसिंहः कदाऽपि न बिभीयादिति सत्यं जानीहीति.

( ३ )

इदं प्रतिवचनं निशम्य स्वकन्याविवाहे निराशः स चन्दुलालः कोपातिरेककलुषितचित्तवृत्तिरहर्निशं तस्य नाशाय प्रायतत. स तु विनष्टविवेकबुद्धिः प्रथमं दिल्लीनगरं गत्वा दिल्लीश्वरं साक्षात्कृत्य समग्रं शीखधर्ममेव नाशयितुमैच्छत्. स च निभृतं राजसभास्थानां राजपुरुषाणां यवनानां शीखधर्मानुयायिनामुत्कर्षेण संजातशंकानि चित्तानि विज्ञाय सन्तुष्टः सत्वरमेव दिल्लीनगरमागच्छत्. तत्रागत्य च प्रथमतः प्रमुखान् राजपुरुषान् शीखधर्मद्वेषिणो महंमदीयान् साक्षात्कृत्य गुरोरर्जुनसिंहस्य निन्दया तदीयान्यन्तःकरणानि कलुषीकृत्य तद्द्वारा दिल्लीश्वरमपश्यत्. अवदच्च–स्वामिन्! भगवता सकललोकनाथेनास्मिन्मृत्युलोके महंमदीयधर्म एव सर्वेषु धर्मपथेषु श्रेष्ठत्वेन स्थापितः. यतस्तस्य

प्रसाराय यूयमेव भारतवर्षस्य स्वामिनः कृताः. तस्मान्नायं केवलं राजधर्मः किंतु ईश्वरधर्म एव. यो हि एनं द्वेष्टि स ईश्वरमेव द्वेष्टी-त्यंगीकर्तव्यं. एवं सति योऽयमुत्तरार्यावर्ते शीखधर्मनामा नूतन एव धर्मपथः प्रचलितोऽस्ति तस्य प्रमाणीभूते आदिग्रंथेऽस्य धर्मस्य निन्दैव कृता. अधुना तु प्रमत्तस्तस्य गुरुरर्जुनसिंहस्तत्प्रतिपादिततत्त्वप्रतिपादनामिषेण लोकान् युष्मत्स्वामित्वप्रतिक्षेपाय वदति. प्रतिदिनमुत्तरार्यावर्ते कक्षराशावग्निस्फुलिंगवद्राजद्रोहः प्रसरति. तेन दुष्करं भवति राजनियमानुष्ठानं. तत् स्वामिना लोककल्याणार्थमवश्यं स ग्रंथ एव नाशनीयः. विनाशिते च तस्मिन् ग्रंथे मूलच्छेदनाद्वृक्ष इव तन्मूलकः शीखधर्मोऽपि विनश्येत्? इति.

वाचकाः! स्वार्थपरा जनाः किं किं न कुर्युः? अयं च चन्दुलाल आर्याणां कुले संभूतः स्वधर्मनाशायैवोद्यतः. सहस्रशः सन्ति एतादृशान्युदाहरणानि. भगवानीदृशान् कुलांगारानुत्पाद्य साधुजनं परीक्षत इति तु सत्यं. अस्तु. दिल्लीश्वरोऽकबरपुत्रः केवलं विलासमग्न ऐश्वर्यमदोन्मत्तस्तस्मिन्नेव क्षणे तस्यादिग्रंथस्य बलादाहरणायाज्ञामुत्ससर्ज. चन्दुलालश्च तामाज्ञां गृहीत्वा स्वर्गमेव हस्तगतं मन्यमानोऽनभिज्ञातसज्जनहृदयः सहसाऽऽगत्य गुरुमर्जुनसिंहमवदत्—इयं हि राजाज्ञा. मदीयां कन्यां वा स्वीकुरु. अथवा धर्मग्रंथं वा देहि? अस्मादृशां राजमान्यानां जनानामपमानेन किं वा लभ्यत इति सत्वरमेव त्वमनुभविष्यसीति.

गुरुरर्जुनसिंहस्तां राजमुद्रांकितामाज्ञां निरीक्ष्य क्रुद्धोऽपि शममास्थाय तमादिग्रंथं तस्मै ददौ. अवोचच्च—क्षुद्राणां रोषेण यदि

अयमादिग्रंथो नश्येत्तदाऽयमादिग्रंथ एव न भवेत् ? श्रीनानकदेवस्य वाणीं नाशयितुं यदि त्वादृशः क्षुद्रः शक्नुयात्तदा स कथं गुरुराजो भवेत् ? अहं तु मन्ये यस्य दहनमेव स्वभावः, यो हि कृत्स्नं ब्रह्माण्डं दग्धुं शक्नोति स वन्हिरपीममादिग्रंथं न दहेत्तदा के यूयमिति.

स तु पापी राजमान्यश्चन्दुलालस्तेन भाषणेन संतप्तः सत्वरमेव तमादिग्रंथं गृहीत्वा दिल्लीनगरमाजगाम. दिल्लीश्वरश्च तस्यादिग्रंथस्य परीक्षणाय महंमदीयपण्डितानां महतीं सभामकरोत्. ते च पण्डिता मिलिताः प्रत्येकं वाक्यमपश्यन्, परन्तु लेशतोऽपि महंमदीयधर्मस्य वा तद्ग्रंथस्य वा निन्दां नालभन्त.

एवं परीक्ष्यादिग्रंथं ते सर्वेऽपि दिल्लीश्वरमवोचन्—दिल्लीपते ! अस्मिन्नादिग्रंथेऽस्माकं धर्मस्य वा तथा कुराणपदवाच्यस्य धर्मग्रंथस्य वा निन्दा लेशतोऽपि नास्माभिरवलोकिता. प्रत्युत स्थाने स्थाने कुराणोक्तीरुदाहरता श्रीनानकदेवेन महानादरः प्रदर्शितः. एष च धर्मग्रंथः केवलं भक्त्या परमात्मसेवाविधानार्थं लोकानुपदिशति. नात्र किमप्यन्याय्यमिति.

दिल्लीश्वरोऽपि तेषां वचोऽङ्गीकृत्य तमादिग्रंथं शिष्यवर्गायोपदेष्टुं गुरवेऽर्जुनसिंहाय ददौ. चन्दुलालस्तु इमं स्वप्रयत्नं विफलं मन्यमानोऽन्यं प्रसंगं प्रतिपालयामास.

दिल्लीपतेरकबरपुत्रस्य जहांगीरनाम्नो ज्येष्ठः पुत्रः केनाऽपि कारणेन पितृद्रोही भूत्वाऽयुध्यत. युद्धे च पराजितो दीनवद्गुरुमर्जुनसिंहं शरणीकृत्य प्राणरक्षार्थमयाचत. गुरुरर्जुनसिंहो जात्या क्षत्रियः शरणागतानां परिपालनं क्षत्रियाणां व्रतं जानन्

सहसा तमरक्षत्.

चन्दुलालश्च काकवत् क्षतनिरीक्षणदक्ष इमं प्रसंगं स्वाभीष्टसाधकं मन्वानः सहसा दिल्लीपतिं साक्षात्कृत्य जगाद्-स्वामिन्! अयमर्जुनसिंहोऽधुना नोपेक्षार्हः. स च पितृद्रोहिणं तव ज्येष्ठं पुत्रं साहाय्ययन् महंमदीयराज्यं नाशयितुमिच्छति. राजराजेश्वर! यद्यपि त्वं दयासिन्धुस्तथापि अस्माकं कल्याणार्थमेनमर्जुनसिंहं नाशय. वयं हि यथा महंमदीये राज्ये सुखेन जीवामस्तथा न कुत्रापि राज्ये. अयं हि प्राचीनगुरुवन्नेश्वरं सेवते किंतु रात्रिंदिवं व्यवहरन् धनसंचयं तथा शस्त्रसंग्रहं करोति. अयं न धर्मगुरुः किंतु धर्मगुरुमिषेण राजा भवितुमिच्छति. दयानिधे! स्वल्पोऽपि शत्रुर्गद इव नोपेक्षणीयो राज्ञेति सर्वाण्यपि शास्त्राणि वदन्तीति.

स तु दिल्लीपतिः प्रथमत एवान्यैः शीखधर्मद्वेषिभिः कलुषितान्तःकरणस्तस्य चन्दुलालस्येदं भाषणं सत्यं मन्यमानः शीघ्रमेव सेनापतिमाहूय तमर्जुनसिंहं बन्दीकृत्यानेतुमादिदेश. सोऽपि सेवकधर्ममभिज्ञाय सशस्त्रसैनिकान् गृहीत्वा तं चन्दुलालमग्रेसरं विधायामृतसरमागच्छत्.

(४)

स च दुर्जनश्चन्दुलालस्तं सेनापतिं बहिः स्थापयित्वा द्वेषेण ज्वलन्नन्तः प्रविश्य गुरुमर्जुनसिंहमवदत्—अचिरादेव राजमान्यस्यापमानेन किं फलं लभ्यते तद्द्रक्ष्यसि. अधुनाऽपि यदि मदीयां कन्यां स्वस्नुषां विधातुमिच्छसि चेत्तदा त्वां जीवयिष्यामि. न चेदितो बन्दीकृत्य नीतः शुनो मुखं द्रक्ष्यसि. तत्कतरत्ते रोचत इति सत्वरं कथयेति.

स तु महात्मा गुरुरर्जुनसिंहोऽविकृतमुखप्रसादः सहासमवदत्- प्राप्ते काले यस्त्वमात्मानमपि रक्षितुमसमर्थः स त्वं मां कथं रक्षिष्यसि. अधुना मां बन्दीकृत्य यद्यपि कृतकृत्यमात्मानं त्वं मन्यसे तथापि सर्प इवाचिरादेवान्यहस्तेन कालमुखं द्रक्ष्यसि. यो हि वृथा सज्जनं पीडयति तं सर्पमिव पापिनं नरं सर्वेऽपि जना नाशयितुं तत्पराः समये घातयन्त्येव. अहं हि क्षुद्रस्य शरीरकस्य कृते नापमानं स्वीकरिष्यामि. बन्दीकृतोऽपि सिंहो न मृगवत्तृणं भक्षयति. इयं हि भारतमेदिनी त्वादृशान् कुलांगारान् जननीजठरभारभूतान् प्रसूयात्मानं पारतंत्र्यनरके पातयति. भगवान् सर्वरक्षणसमर्थो यदि मां निरपराधिनमीदृशेन दण्डेन योजयितुमिच्छति तदा तत्र तस्य कोऽपि गूढो भावः स्यात्. न वयं जानीमहेऽचिन्त्यान् सर्वानपि भावान्. अस्माभिश्च तदाज्ञापालनमेव श्रेयस्करमिति मन्तव्यमिति.

स तु पापी चन्दुलालोऽभिमानेन ज्वलन्निव सहसा सेनापतिं गुरुमर्जुनसिंहं बन्दीकर्तुमवदत्. सोऽपि राजाज्ञापालनतत्परः सहसा सैनिकानाहूय तं गुरुमर्जुनसिंहं बन्दिनमकरोत्. तेषु सैनिकेषु समागतेषु सत्सु गुरुरर्जुनसिंहः स्वयमेवाग्रे गत्वा तदधीनो बभूव.

गुरुरर्जुनसिंहश्चन्दुलालहस्तेन दिल्लीश्वरेण बन्दीकृत इति सर्वत्र प्रसृतां वार्तामाकर्ण्य सर्वेऽप्यमतसरनगरवासिनस्तथा समीपस्थाः शीखधर्मानुयायिनो विस्मिताः सहसा तस्य गुरोरर्जुनसिंहस्य निवासमभितः समुपतस्थिरे. अगणिता जना अन्यधर्मानुगा अपि तं सज्जनं विनाऽपराधं बन्दीकृतमवलोक्य दुःखाकुला अभवन्.

अथ दिल्लीनगरं जिगमिषुर्गुरुरर्जुनसिंहः सर्वांस्तत्रोपस्थितान् शीखधर्मानुयायिनो वीक्ष्य सानन्दमवदत्—शिष्याः! अहमिदं कारागारदुःखमनुभवितुं दिल्लीनगरं गच्छामि. मां च निरपराधिनं सर्वेऽपि यूयं जानीथैव. अनेन क्षुद्रेण बन्दीकृतं मां वीक्ष्य प्रतीकारासमर्थाः केवलमश्रूणि मुञ्चन्तो भवन्तः स्वदौर्बल्यं प्रकटीकुरुत. ये खलु लौकिकपुरुषार्थसाधने न प्रभवन्ति कथं खलु तेऽलौकिकपुरुषार्थसाधने समर्था भवेयुः? यथा हि मानवेभ्योऽलौकिकं फलं प्रदातुं धर्मोऽवतीर्णस्तथैव लौकिकस्वास्थ्यमपि. यो हि धर्मः केवलमलौकिकफलचिन्तां वहंल्लौकिकफलदानेऽत्यन्तमुदास्ते तं धर्मं मृतं मन्यमाना जना नानुसरन्ति. नापि स वर्धते किंतु प्रतिदिनं राजयक्ष्माक्रान्तो मानव इव क्षीयमाणोऽवश्यं नश्यति. तद्वत्साः! यदि युष्माकं स्वधर्मोत्कर्षोऽभिप्रेतः, यदि वा स्वधर्मरक्षा व इष्टा तदा क्षुद्रजनैर्विहितानीदृशानपकारान् प्रतिकर्तुं सामर्थ्यं लभध्वं. यथा हि खड्गधारिणः सकाशाद्दुष्टो मानवो बिभेति नैवं शापदायिनो ब्राह्मणात्. यथा हि जनो भस्मनां चयमवस्कन्दति नैवं स्वल्पामपि पावककणिकां. किमत्र कारणं? ऋते दुष्प्रधर्षात्तेजसः. तद्यदि कीटवद्येन केनापि प्रकारेण जीवनं वोऽभिप्रेतं तदा नास्ति किमपि वक्तव्यं. यदि तु तन्नाभिप्रेतं तदा तादृशं दुष्प्रधर्षं तेजः संपादयितुमित ऊर्ध्वं प्रयतध्वम्. यदि भगवान् युष्मांस्तादृशतेजःसंपादनोन्मुखान् कुर्यात्तदाऽहमिममपकारिणमपि चन्दुलालमुपकारिणं मंस्ये. अवश्यंगामिन इमे प्राणा यदि एतादृशशुभफलदायिनो भवेयुस्तदाऽपरं किं वा श्रेयस्करं? परममान्याः श्रीना-

नकदेवप्रभृतयः प्राचीना गुरवोऽपि युष्मान्दुर्बलान्वीक्ष्य किं वदेयुः ? यो हि दुर्जनः पुण्यपापे न मनुते, स्वस्वार्थबुद्धिवांच्छितपूरणमेव स्वकर्तव्यं जानीते तं पशुं प्रति धर्मोपदेशेन किं ? स हि प्रबलेन दण्डेनैव शासनीयः. एवं शासितश्च कदाचित्स्वार्थबुद्धिं विहाय प्रकृतिमापन्नो मानवजातिकर्तव्यं जिज्ञासेत. यश्च सज्जनः स्वकर्तव्यं जानाति तस्मै धर्मपथ उपदेष्टव्यः. इयं हि व्यवस्थाऽधिकारिभेदेनाऽवश्यं पालनीया. अन्यथा व्याघ्राक्रान्ता गाव इव दुर्जनाक्रान्ताः सज्जना विरला नामशेषा वा भवेयुः. तद्वत्साः ! इदमन्तिमं मे वचः सम्यगवधार्य तथाऽनुष्ठानपराः सुखिनो भवत. यथा हि राजा न्यायदण्डोभयसहित उत्कर्षं प्राप्नोति, एवमेव धर्मोऽपि, एकांगहीनस्तु यथा नृपो जीवितुमपि न शक्नोत्येवं धर्ममप्यवगच्छत. तदवश्यं यदि यूयं श्रीनानकदेवस्थापिते शीखधर्मेऽनुरागिणस्तदा तमुभयांगमण्डितं परमुत्कर्षशालिनं कुरुत. अहं स्वर्गे स्थित्वा युष्माकं कर्माणि पश्यन् स्वधर्मोत्कर्षं वीक्ष्य मदीयप्राणत्यागं सफलं मंस्ये. एष बालो हरगोविन्दो युष्माभिरेव रक्षणीय इति.

श्रुत्वा चेदं तेजस्वि भाषणं सर्वेऽपि शीखधर्मानुयायिनः शोकाकुलाः क्षत्रियवृत्तिस्वीकाराय प्रत्यजानन्.

अथ स च चन्दुलालस्तेभ्यः क्रुद्धेभ्यः शीखधर्मानुयायिभ्य आत्मनोऽनिष्टं मन्यमानः सत्वरमेव तं गुरुमर्जुनसिंहमादाय दिल्लीनगरं गन्तुं प्रातिष्ठत. स्थाने स्थाने मिलिताः शीखधर्मानुयायिनः स्वगुरुं बन्दीकृतमवलोक्य दुःखाकुला अपि प्रतीकारासमर्थाः केवलमशपन्. स तु शठस्तान् शापशब्दानाकर्ण्य प्रहसन्न

किंचिदपि मनस्यकरोत्. तेऽपि सैनिकानां तीक्ष्णानि शस्त्राणि मनसि कृत्वा तूष्णीं तस्थुः.

ततश्च कतिपयदिवसैर्दिल्लीनगरमागत्य सेनापतिः सर्वं वृत्तं दिल्लीश्वराय न्यवेदयत्. स त्वविचारी सहसा तं कृशं गुरुमर्जुनसिंहं कारागारे स्थापयित्वा तं चन्दुलालमेव तदधिकारिणमकरोत्.

पापी चन्दुलालः प्रतिदिनं गुरुं नानाविधैरुपायैः क्लिश्नाति स्म. स तु भूयो भूयः स्वाभिलषितपूरणेनात्मानं मोचयितुं गुरुमवदत्. परन्तु सत्यवाक् स गुरुरर्जुनसिंहः ' वान्तं श्वा पुनरादत्ते न मानव ' इति वदन्निराशं चक्रे. आशाभंगक्रुद्धः सोऽपि दुरात्मा तं प्रतिदिनमधिकं पीडयामास.

एकदा तदीयां पीडां सोढुमसमर्थः स गुरुरात्मनो जीवनं समापयितुं निश्चयं चक्रे. क्रमेण वर्धमानकोपान् स्वानुयायिनो निशम्य स्वस्य कारागृहवासं सफलं मन्यमानः स शूरो गुरुरर्जुनसिंहः स्नानार्थं नदीं गतः परितो वीक्षमाणेषु सेवकेषु सत्सु आत्मानं गभीरे नदीजले पातयित्वा स्वर्गमगमयत्. सर्वेऽपि निरीक्षणनियुक्ताः पुरुषाः संभ्रान्ता इतस्ततस्तदीयं देहमन्विष्यन्तोऽपि न लेभिरे.

वाचकाः ! नीचेनार्यधर्मानुयायिनैव चन्दुलालेन स्वकीयो धर्मभ्राता परेषां साहाय्येन निहत इति किं न शोकास्पदं ? सज्जनाः ! प्रतिदिनमगणिता जना एवमेव कलहायमानाः परेषां साहाय्येन स्वदेशबान्धवान् घ्नन्ति. परन्तु गुरुरर्जुनसिंहो यथा सधैर्यमवर्तत तथा वर्तमाना जना अतीव विरलाः. अत एव तेषां शाश्वतं यशः सर्वत्र प्रसृतं. अस्तु.




[ पूर्वभागः ]

१ पितृवधकोपः.
२ शस्त्रविद्याप्रसारः.
३ स्वातंत्र्येण शासनाधिकारः.
४ उपदेशः.

( १ )

गुरावर्जुनसिंहे दिल्लीश्वरेण बन्दिनि कृते सति सर्वेऽपि शीखधर्मानुयायिनस्तदुपदेशामृतं हृदि धारयन्तो महता धैर्येण गुरुबन्धदुःखं विस्मृत्य तदीयमेकादशवर्षं पुत्रं हरगोविन्दं गुरुपीठाधीश्वरमकुर्वन्. हरगोविन्दश्च सुन्दरो बलाढ्यः शरीरबलवर्धनार्थं क्रमेण कृतप्रयत्नः शस्त्रविद्यापारग एवासीत्. स च सर्वदा गुरुपदार्ह एवासीत् परन्तु सर्वत्र लोभाकुलेषु शीखधर्मशत्रुषु जाग्रत्सु सत्सु कथमयं शीखधर्मं परिरक्षेदिति चिन्ताव्याकुला एव प्रधानाः शिष्यगणा आसन्. परन्तु अल्प एव समये स गुरुर्हरगोविन्दस्तान् स्वचातुर्येण निश्चिन्तानकरोत्. यथा खलु तदीयः पिता गुरुरर्जुनसिंहः शिष्यानुपादिशत्, स्वयं च सर्वेषामपि दानगृहाणां व्यवस्थामपश्यत्, तथैव गुरुर्हरगोविन्दोऽप्यकरोत्. किन्तु प्राधान्येन

तस्य शरीरबलवर्धन एव रुचिरासीत्. स चान्तिमं पितुरुपदेशं मनसि कुर्वाणो रात्रिंदिवं क्षत्रियवृत्तिपालनार्थं प्रायतत. विविधशस्त्राणां हस्तक्षेपांस्तथाऽश्वारोहकौशलं च सोऽचिरादेव समपादयत्. स च प्रतिदिनं लक्ष्यवेधमभ्यस्यन्नचिरादेव शब्दवेधी बभूव. एवं द्वंद्वयुद्धेऽपि लब्धप्राविण्यो महतो बलाढ्यानपि मल्लानजयत्. एकेनैव खड्गप्रहारेण स महतो लोहखण्डान् कदलीस्तंभानिव चिच्छेद.

एवं शमवृत्तिं त्यक्त्वा रजोगुणप्रधानां वृत्तिमाश्रित्य वर्तमाने तस्मिन् गुरौ हरगोविन्दे तादृशा एव जनास्तस्य सहचरा अभवन्. नाधुना पूर्ववत् केवलं वैराग्यसम्पन्ना एव जनाः संसारकर्मण्युदासीना गुरुप्रिया अभवन् किंतु शस्त्रविद्याकुशला मल्ला युद्धक्रियापारंगता अपि. तेन स शीखधर्मगुरोराश्रमो राजप्रासाद इव दुर्जनानां भयंकरो दीनानां सुखदश्चाभूत्.

( २ )

प्रथमत एव गुरोरर्जुनसिंहस्योपदेशेन प्रबुद्धा ज्ञातदौर्बल्याः शीखधर्मानुयायिनो दुर्जनशासनायावश्यकं शरीरबलं संपादयितुं प्रायतन्तैव. परन्तु स्वगुरुमेव तथा वर्तमानं विलोक्य सोत्साहं प्रावर्तन्त. अचिरादेव सर्वेऽपि शीखधर्मानुयायिनः शरीरबलसंपन्ना अजायन्त. यदा कदाचित् कश्चन संसारविरक्तो गुरोः पुरत आगच्छत्तदा स गुरुर्हरगोविन्दस्तं सम्यक् प्रबोध्य प्रवृत्तिमार्गानुयायिनमकरोत्.

विचारशीलो ज्ञातकर्तव्यः पितृवधदग्धचेता गुरुर्हरगोविन्दः प्रायः सर्वानपि स्वशिष्यान् प्रवृत्तिपरानवलोक्य संतुष्टो

मनसि विचारयामास. ये खलु निसर्गत एव भारतवासिनः संसारविरक्ताः केवलं पारलौकिकफलानुसन्धानेनैव कृतकृत्यं मन्यमानाः पशुतुल्यानां दुर्जनानां पादहतिमसहन्त ते च सम्प्रति एवं बलसम्पन्नाः कदापि न सहिष्यन्त इति सिद्धम्. परन्तु दुर्जना भगवता प्रदत्तां न्याय्यान्याय्यविवेकशक्तिशालिनीं बुद्धिं व्ययीकृत्य सज्जनजननाशायालौकिकशक्तिशालीनि शस्त्राणि विरचयन्ति. निर्माय च तानि तैरनेकाञ्जनपदाञ्जिमनुष्यान्विधायान्यांश्च स्वायत्तान् कृत्वा तत्संपादितैर्विषयैः स्वेन्द्रियाणि तर्पयन्ति. तद्यथा यथा दुर्जनः परस्वहरणाय प्रवर्तते तथैव तस्य नाशाय सज्जनेन प्रयतनीयं. अधुना चेमे महंमदीयाः कुशलमतिभिः कल्पितानि शस्त्राणि स्वाभिलषितसिध्यै समुपयुंजाना दुर्जेयाः संवृत्ताः. तस्मादधुनाऽस्माभिरपि स्वसंरक्षणाय शस्त्रप्रसारः कर्तव्य एव. बलाढ्यं व्याघ्रमपि वेगेनापतन्तं शस्त्रसहायो मानवः पराजयते. तदधुनाऽस्माभिरपि स्वरक्षणाय तथा दीनपरिपालनाय शस्त्रविद्याप्रसारः कर्तव्य एवेति.

निश्चित्य चैवं स चतुरो हरगोविन्दः स्वयमेव खड्गलतालंकृतमध्यो भूत्वा गुरुपीठमलंचकार. स्वगुरुमेव च खड्गधारिणमवलोक्य तदनुयायिनः सर्वेऽपि तदभिप्रायं जानन्तः सशस्त्रा अभवन्. अचिरादेव गुरुर्हरगोविन्दः स्वस्योपदेशश्रवणायागच्छतः शिष्यसंघान् सशस्त्रानेव व्यधात्. स्वयमेवान्यांश्च तथोपदिदेश. निसर्गत एव बलाढ्यास्त उत्तरार्यावर्तनिवासिनो जना निर्धूतमोहाः प्रदीप्ततेजसः सद्यो हुताः पावका इव दुर्दर्शा अजायन्त. स्थाने स्थाने च संचरतस्तान्शिष्यसंघान् सशस्त्रानव-

लोक्य राज्यमदभारभुग्नास्ते महंमदीया विस्मिताः स्वराज्यहरणशंकामगृह्णन्.

स गुरुर्हरगोविन्दः स्वशिष्यसंघान् शस्त्रधारणोत्सुकानवलोक्य मृगयां विधातुं प्रारभत. प्राचीनाः सर्वेऽपि गुरवः सात्विकाः परप्राणव्यपरोपणं पातकं मन्यमाना न मृगयामकुर्वन् परन्तु यदारभ्य दुर्जनशासनमपि धर्मांगमिति मन्यमानैः शीखधर्मगुरुभिः क्षत्रियव्रतं स्वीकृतं, तदारभ्य मृगयां विना शस्त्रपाटवरक्षणमशक्यमिति ज्ञात्वा तां प्रारभन्त. प्रथमतः स गुरुर्हरगोविन्दः कतिपयैः स्वानुयायिभिः समं महारण्यं गत्वा वनमृगान् हत्वा स्वशौर्यं वर्धयामास. निवृत्तश्च हतान् मृगानपि स्वभवनमनयत्.

श्रीगुरुर्हरगोविन्दः सशस्त्रान् मृगयारतान् स्वानुयायिनोऽवलोक्य सन्तुष्टो मनासि भूयो विचारयामास. इमे हि यवनाः सारासारविवेकशून्याः क्षुद्रमप्यपमानमसहमाना अपकर्तारं शासितुं प्रवर्तन्ते. न तथा भारतवासिनः. किमत्र कारणं? ऋते सत्वगुणाधिक्यात्. अयमत्यन्तं प्ररूढः सात्विको गुण एकां कांचन व्यक्तिं मोक्षं गमयित्वोपकरोति परन्तु अन्यानयोग्यानपि तथा वर्तमानाम् जनान् व्यवहारायोग्यान् करोति. तद्रजोगुणप्रधानैर्जनैः समं वर्तितुं रजोगुणाधिक्यमेव संपादनीयं. एतादृशं च सत्वमाहारविशेषजन्यं. ते हि मांसप्रधानाहारा व्याघ्रा इव क्रूरा भवन्ति. वयं तु शाकोदनभुजोऽजा इव तद्भक्ष्यं भवामः. तदधुना मांसभक्षणनिषेधोऽपि दूरीकरणीय एवेति. एवंकृतविचारः स गुरुर्हरगोविन्दो मृगयाहतानां वन्यमृगाणां

मांसं स्वभवन एव पाचयितुमारभत. सर्वैः समं तद्भक्षयामास च. शिष्यगणाश्च गुरौ परं विश्वस्तास्तथैवान्वातिष्ठन्त.

वाचकाः! पश्यत कालमाहात्म्यं! यो हि शीखधर्मः केवलं भक्तिपर ईश्वरसेवाविधानार्थं भगवता गुरुराजेन नानकदेवेन स्थापितः, स एव दुर्जनपीडापरिहाराय स्वरूपं सात्विकं त्यक्त्वा राजसं जग्राह. सर्वेऽपि तदनुयायिनः कालं प्रतीपं मन्यमानास्तदनुकूला एवाभवन्. ये खलु वृद्धा आसंस्तेभ्यो नारोचतेदं परिवर्तनं परन्तु न ते प्रतीपमवर्तन्त.

(३)

एवं स्वानुयायिनः प्रतीकारसमर्थानवलोक्य सानन्दः पितृवधकोपं शमयितुमिच्छुः स्वयमेवाचिन्तयत्—अधुना महता परिश्रमेण परिवर्धितं बलं दीनरक्षणायोपयोजनीयं. इदं हि राजसं तेजः क्रमेणोपयुक्तमेव वर्धते न स्थापितं. इमे यवना अस्माकं शासने नार्हाः. यतो यदा स्वजातीयविरुद्धः कश्चनास्मदीयश्चेत्ते न्याय्यान्याय्यविचारं विहाय स्वजातीयपक्षपातिनः क्रूरेण दण्डेन भारतवासिनं दण्डयन्ति. प्रायश्च सात्विका भारतवासिनः क्रूरदण्डभिया न महंमदीयानपकुर्वन्ति परन्तु त एव राज्यमदोन्मत्ताः पशुवद्वर्तमाना इमान् पीडयन्ति. न्यायालयं गत्वा विब्रुवन्ति च. न्यायाधीशाश्च तत्पक्षपातिनो दीनानामस्मदीयानां वाचोऽश्रुत्वैव दण्डयन्ति. तदिदमन्याय्यं. अन्यायं वीक्ष्य यदि बालिभिरस्माभिस्तन्निराकरणाय न प्रयत्यते तदा बलेन किं? तस्मान्न्याय्यान्याय्यविचाराधिकारः स्वयं प्राप्य इति.

द्वितीय एव दिने सर्वानपि शिष्यानाहूय तेभ्य इदं कथयित्वा न्यायविचारमारभत.

तं च व्यवहारशासनाधिकारं गुरुणा हरगोविन्देन गृहीतमवलोक्य सर्वेऽपि तत्रत्या जना विस्मिता अजायन्त. ये खलु महंमदीया उत्तरार्यावर्ते निवासिनस्ते खलु शीखधर्मगुरोरिदं साहसं स्वहानिकरं मन्यमानाः प्रतीकारविधानाय निभृतं प्रायतन्त.

गुरुर्हरगोविन्दः सर्वमिदं वृत्तं सर्वत्र संचारिभ्यश्चारेभ्योऽवगम्य सावधान एवावर्तत. प्रायः सर्व एव शीखधर्मानुयायिनः स्वकीयान् व्यवहारान् गुरुमुखेनैव निरणयन्. समये समये यवनानपि कुमार्गगामिनो गुरुर्हरगोविन्दो दण्डयन् स्वकीयानरक्षत्. तेन सुखिनः शीखधर्मानुगास्तथा सनातनधर्मानुयायिनोऽपि गुरवे हरगोविन्दायास्पृहयन्.

( ४ )

एवं प्रवर्धमानबलः स प्रतापी गुरुर्हरगोविन्दः समयमनुकूलं तथा स्वधर्मानुयायिनो नियोगपालनतत्परानवलोक्य पितृवधदुःखं परिमार्ष्टुमनाः प्रथमं स्वसंरक्षणार्थं प्रायतत. स हि प्राचीनगुरुवन्न केवलं द्रव्यमेवोपायनत्वेन जग्राह, किंतु युद्धोपयोगिनीं सामग्रीमुत्तमानश्वांस्तथा शस्त्राणि च शिष्यैरुपायनीकृतानि प्रतिगृह्य परमतुष्यत्. क्रमेण वर्धमानान् स्वशत्रूनवलोक्य स्वशरीररक्षणाय सशस्त्रान् बलिनो मल्लान् स्थापयामास. अचिरादेव शत्रुप्रतिकारक्षममेकं बलाढ्यं दुर्गं विरचय्य तत्र सैनिकगणं स्थापयित्वा तद्रक्षणार्थमश्वारोहाणां महान्तं संघं

विरचयामास. समये समये—वत्साः! एष चन्दुलालो मम पितरं निष्कारणमवधीत्. यथा ह्यहं तस्यौरसः पुत्रस्तथैव यूयमपि धार्मिकाः पुत्राः. तद्यथा पितृवधदुःखं मां दहति तथैव युष्मानपि. वत्साः! दीनपशुवन्निहतस्य मे पितुः श्राद्धमहं तेषामेव रुधिरेण करोमि यैर्निष्कारणं मे पिता निहतः. यो हि पुत्रः स्वपितृशत्रुनिहननेन पितरं संतोषयितुमसमर्थः केवलमीश्वरवितीर्णेन जलेन तर्पयितुं प्रयतते तस्य पुत्रस्याजन्मैव वरं. तेन सुलभेन जलेन कथं पिता तृप्येत्? शिष्याः! यो हि निर्बलो यत्किंचिदपि प्रतिकर्तुं न शक्नोति तं सर्वेऽपि द्विषन्ति विनाशयन्ति च. यस्तु बली तं क्षुद्रा वा बलाढ्या वा जनाः पीडयितुं न शक्नुवन्ति. यथा हि यः कोऽपि दीनमजापुत्रं बलीकरोति नैवं व्याघ्रं. किमत्र कारणं? ऋते सामर्थ्यात्. समर्थो हि व्याघ्रः स्वप्राणहरणोद्यतान् सशस्त्रानवलोक्याऽपि तेषामन्यतमान्निहत्यैव स्वयं पंचत्वं याति नान्यथा. अजापुत्रस्तु दीनः प्रतीकारासमर्थ एक एव याति. तेन प्रतिदिनं क्षुद्रा अपि जनास्तं बलिनं कुर्वन्ति. तत्कथयत! किमजापुत्रवन्मरणं वः श्रेय उत व्याघ्र इव क्षणमात्रमपि जीवनं. यदा हि मम पिता दिल्लीनगरमगच्छत्तदा वयं सहस्रशो मिलिताः किमपि कर्तुं न प्राभवाम. अस्माकं गुरुं हत्वाऽत्रैव चन्दुलालः सुखेन जीवति. यावदहं तं नीचं गुरुघातकं शूलावतंसं न करिष्यामि तावन्मम पिता सुखी न भवेत्. यद्यपि चास्माभिःपरपीडाभीरुभिरत्यन्तमुद्विग्नैः क्षणमात्रं सात्विकवृत्तिं त्यक्त्वा राजसी वृत्तिः स्वीकृता तत्रापि कारणं पितृवध एव. मदीयपितृवद्दीना जना

दुर्जनैरेभिः परिपीडिताः प्राणान् मुंचन्ति. तदेषां नाशाय सर्वथा बलिभिरस्माभिः प्रयतनीयम्. इत्यादिभिर्वचनैः प्रोत्साहयन् प्रतीकारोत्सुकानकरोत्.

## ( उत्तरो विभागः )

१ दिल्लीपतिकोपः.
२ दिल्लीपतिसाहाय्यविधानं.
३ महंमदीयैः समं युद्धप्रसंगः.
४ कीर्तिपुरवासः.

( १ )

एवं गुरुं हरगोविन्दं क्षुब्धं शस्त्रास्त्राभ्यासदक्षं दुर्गादिनिर्माणतत्परमवलोक्य स चन्दुलालः परं भीतस्तस्य नाशायाचेष्टत. तं च दुष्टं नीचः पृथ्वीचन्द्रः परमसाहाय्ययत्. वाचकाः! अयं पृथ्वीचन्द्रः पूर्ववद्गुरुपदलोभाकुलः स्वबन्धुघातकं तं चन्दुलालं कथं साहाय्ययामीति न मनसाऽपि व्यचिन्तयत्. स च भ्रातुष्पुत्रस्य गुरोर्हरगोविन्दस्य पराक्रमकृत्यानि वीक्ष्य ज्वलंस्तन्नाशाय नानोद्यमांश्चक्रे. तौ च महत्या त्वरया दिल्लीनगरं गत्वा दिल्लीपतिं साक्षात्कृत्य मिथ्याभाषणैस्तस्य मतिमदूषयताम्. अवोचतां च- सम्राट्! अयं गुरुर्हरगोविन्दो रात्रिंदिवं दुर्गाणि विरचयति. सैनिकांश्च स्थापयति. अश्वारोहाणां मंडलमपि विरचयामास. सर्वैरपि एभिः कृत्यैः स शीघ्रमेव पितृवधवैरनिर्यातनं करिष्यतीत्यनुमिनुवः. उत्तरार्यावर्ते च त्वदीयं शासनं नास्त्येव. यतो बलाढ्योऽयं हरगोविन्दः स्वसजातीयानां पक्ष-

मवलंब्य स्वत्सजातीयानपि शास्ति. राजन्- यस्मिन्नार्यावर्ते सर्वेऽपि सनातनधर्मानुयायिनो महंमदीयैरात्मानं जितान् मन्यमानास्तदादरतत्परास्तद्विहितानपमानान्निभृतमसहन्त, तत्राधुना क्षुद्रमपि कारणं लब्ध्वा निःशंकं ते महंमदीयांस्ताडयन्ति. स्वल्पमपि अपमानं तैर्विहितं न सहन्ते. अस्य विपर्ययस्य कारणमयं हरगोविन्द एव. स हि सर्वानपि स्वानुयायिनः सशस्त्रान्विधायान्यायनिराकरणार्थमुपदिशति. तेऽपि तदाज्ञां शिरसा धारयन्तः सर्वत्र पर्यटन्तो महंमदीयानेव पीडयन्ति. समये समये घ्नन्ति च. तेन सामान्याः प्रजाजना अपि विश्वस्तास्त्वदीयसत्तानाशायोत्सुका एव. तेनास्मादृशां स्वामिभक्तानां दुःखं भवति. यदि च सर्वज्ञकल्पः स्वाम्येव सर्वमिदं विदित्वा तूष्णीं तिष्ठति तदाऽसहायैरस्मादृशैः किं करणीयम्. तच्छीघ्रमेवैनं नाशय. अयं च वर्धमानः सर्प इव दुष्टो हरगोविन्दोऽधुना नोपेक्षार्ह इति सत्यं जानीहीति.

दिल्लीपतिश्च तयोरिदं भाषणमाकर्ण्य क्रुद्धः सत्वरमेव तं गुरुं हरगोविन्दं बन्दीकृत्यानेतुं वजीरखाननामानं सेनापतिं ससैन्यं प्रेषयामास. स च सेनापतिः शान्तो विचारी समधिगतसकलशीखधर्मतत्त्वो महताऽदरेण तं गुरुं हरगोविन्दं प्रत्यक्षीकृत्य दिल्लीपतेराज्ञामश्रावयत्. अवदच्च—यद्यस्मिन् समये यूयं स्वयं दिल्लीनगरमागत्य दिल्लीपतिं द्रक्ष्यथ तदा समीचीनं भवेत्. गुणज्ञो दिल्लीपतिरवश्यं युष्मद्वचसा सन्तुष्टो युष्माननुग्रहिष्यतीति.

साहसिको गुरुर्हरगोविन्दस्तस्य सेनापतेर्भाषणं शुभं म-

न्वानः स्वसहायेभ्यः सर्वं कथयित्वा तदनुमत्या दिल्लीपतिं द्रष्टुं दिल्लीनगरगमनमेव श्रेयस्करमिति निरणयत्.

( २ )

नियते समये दिल्लीनगरं जिगमिषुर्गुरुर्हरगोविन्दः स्वस्य परमसहायानाहूयावदत्—वत्साः ! अहं खलु इतो दिल्लीपतिदर्शनार्थं गच्छामि. गत्वा च तत्र यदि यशस्वी भविष्यामि तदा वरमेव. परन्तु यदि विपरीतं किमपि भवेच्चेत्तदा युष्माभिर्धैर्यमवलंब्य शीखधर्मरक्षणार्थं प्रयत्नः करणीयः. यद्यपि सर्वत्र सर्वासु जातिषु दुर्जनाः सज्जनाश्च सन्ति, तथाप्यस्यां यवनजातौ सरलहृदया अतिविरला एव. वयं च साम्प्रतमेभिर्जिताः. अस्मान् पशुवद्यथेच्छं नियोजयित्वा संपादितैर्धनैः स्वाभिलाषपूर्तिः करणीयेत्येषामभिप्रेतं. तत्कथं नास्मानुन्नतान्न नाशयेयुः? अस्माभिश्च धैर्यं विहाय प्रयत्नाः कदापि न मोक्तव्या इति तु न्याय्यं. एष गुरुदासो मम पश्चात्सर्वं मदीयं कार्यं करोतु. यूयमप्यैकमत्येन वर्तमानाः सावधाना एव तिष्ठन्तः स्वस्वकार्याणि कुरुतेति. तेऽपि गुरोर्हरगोविन्दस्येमामाज्ञां शिरसा धारयन्तस्तथैव वर्तितुं शपथं चक्रुः.

अथ नियते दिने गुरुर्हरगोविन्दः समं स्वशरीररक्षकैर्बलाढ्यैरश्वारोहैरन्वितस्तेन सेनापतिना सह दिल्लीनगरमाजगाम. स तु सेनापतिर्यथासमयं स्वामिने तदागमनं निवेद्य तं हरगोविन्दं स्वामिनं दर्शयामास. दिल्लीपतिस्तस्य गुरोर्हरगोविन्दस्य सुन्दरं मुखमण्डलं निर्भीकां तेजस्विनीं मुद्रामालोक्य सन्तुष्टस्तेन समं वार्तालापमकरोत्. अपृच्छच्च शीखधर्मस्य तत्त्वं. गुरुर्हरगोवि-

न्दस्तु— राजन्! इदं हि शीखधर्मस्य परमं तत्त्वं यत्सर्वेऽपि मानवा ईश्वरस्य पुत्रा इति भ्रातर एव. अतस्तैः परस्परं बन्धुभावेन वर्तित्वाऽऽनन्देन स्थातव्यं. यो हि समानायां मानवजातौ द्वेषबीजं वपति तमेव शत्रुं मत्वा तस्य नाशाय सर्वथा प्रयत्नः करणीयः. राजाऽपि परमात्मनो दास एव. स च यदा स्वकार्यं प्रजापालनरूपं सम्यक्करोति तदा सोऽपि परमादरेण सेवनीयः. यदि तु ऐश्वर्यमदान्धनयनोऽन्यायेन वर्तमानः स्वप्रजाजनानेव पीडयेत्तदा स शासनीय एव. प्रथमतस्तस्य दुरात्मानः शासनीयाः सहायाः. दिल्लीपते! किंबहुना—परमात्मनः प्रियं मानवानां परस्परं बन्धुभावं जगति प्रसारयितुमेष धर्मः स्थापितः. एतस्य तत्त्वस्य विरोधिनो ये जनास्ते परमात्मविरोधिन इति मत्वाऽवश्यं शासनीया इति संक्षेपतः शीखधर्मस्य तत्त्वमिति प्रत्युवाच.

दिल्लीपतिश्च तदीयं वाक्कौशलं विलोक्य सन्तुष्टः सर्वानपराधान्विस्मृत्य तस्मै प्रभूतं द्रव्यं वितीर्य कानिचिद्दिनानि स्वसंनिधौ स्थापयामास.

चन्दुलालश्चेदं स्वप्रयत्नस्य विपरीतं फलमवलोक्य दिल्लीनगरान्निभृतं निर्गत्यान्यत्र तूष्णीमतिष्ठत्.

अथ गुरोर्हरगोविन्दस्य वैभवमवलोक्य बहवो राजसभाधिकारिणो निभृतं तमद्विषन्. नानाविधा मिथ्योक्तीस्तमुद्दिश्य दिल्लीपतिमवदन्. तेन कलुषितचित्तवृत्तिर्दिल्लीपतिस्तं गुरुं हरगोविन्दं किमप्यवदत्. स तु निसर्गत एव निस्पृहस्तं सधैर्यं प्रत्युवाच. तेन कुपितः स दिल्लीश्वरस्तं गुरुं हरगोविन्दं

प्रतिबन्धेऽस्थापयत्. ततश्च स्वस्यानिष्टमाशंकमानो बलवता सैन्येन रक्षितं तं विधाय दुर्भेद्ये ग्वाल्हेरदुर्गेऽस्थापयत्.

अमृतसरनगरवासिनः सर्वेऽपि शीखधर्मानुयायिनः स्वगुरुं बन्दीकृतं तथा दिल्लीश्वरं क्षणभंगुरचेतसमाकर्ण्य संतप्ताः सर्वथा शस्त्रसाहाय्ये दत्तनिर्भरा उत्तरार्यावर्तान्निर्गत्य तस्य दुर्गस्य परितः समागत्य गुरोर्मोचनाय प्रायतन्त.

अत्रान्तरेऽकस्मादार्यावर्तरक्षणाय नियुक्त आसफखाननामा राजपुरुषो राजद्रोही नाम भूत्वा तं प्रदेशं स्वायत्तमकरोत्. तत्रस्था सेनाऽपि तेनोपजापिता तत्पक्षपातिन्येवाभूत्. दिल्लीश्वरश्च तां वार्तां निशम्योत्तरार्यावर्तसदृशस्य धनाढ्यस्य समृद्धस्य प्रदेशस्य हानेन स्वराज्यस्य महतीं हानिं पश्यन् सत्वरमन्यान् राजनिष्ठान् सेनापतीनगणितसेनाभारसमन्वितांस्तस्य शासनाय प्रैषयत् परन्तु सर्वेऽपि ते बलाढ्येन पराजिता दिल्लीनगरमागच्छन्. प्रतिदिनं च क्रमेणावर्धत तस्य राजद्रोहिणो बलम्.

दिल्लीपतिश्च तं वर्धमानं राजद्रोहं विलोक्य चिन्तातुरः किंकर्तव्यतामूढ एवाभवत्. तं च चिन्ताव्याकुलमनसमवलोक्य तत्समीपस्थो मियामीरखाननामा कश्चन गुरोर्हरगोविन्दस्य सुहृत्तमवदत्—स्वामिन्! प्रतिदिनं वर्धतेऽयं राजद्रोहः. कदाचिदितोऽप्यागतो महदनिष्टं करिष्यति. तदिदानीमेवायं नाशयितव्यः. बलाढ्याः शीखधर्मानुयायिनः शूराः पूर्ववत्त्वां न साहाय्ययन्ति. अत्र कारणमपि तेषां गुरोर्निष्कारणं बन्दिवास एव. तद्यदि तेषां गुरुः कारागृहान्मुच्येत तदा प्रीताः सर्वेऽपि

ते त्वां साहाय्ययिष्यन्ति. तेन राजद्रोहोपशमोऽपि सुलभो भवेत्. इति.

दिल्लीपतिश्चागातिकः सर्वमिमं तदुपदेशं न्याय्यं मन्यमानस्तथैवाकरोत्. गुरुं हरगोविन्दं ग्वाल्हेरदुर्गादानीय सत्कृत्य साहाय्यविधानाय विज्ञापयामास.

सोऽपि चेमां प्रार्थनामंगीकर्तुं कृतनिश्चयः सधैर्यमवदत्—राजन्! वयं च सर्वदा त्वत्साहाय्याय तत्परा एव. किंतु चन्दुलालसदृशाः पापा अस्मान् राजद्रोहिणो मन्यमानास्त्वदीयां मतिं कलुषीकुर्वन्ति. त्वमपि सारासारविवेकासमर्थस्तत्सत्यं मत्वाऽस्मान् दण्डयासि. तदिदमनुचितं. मानवजातिः सुलभस्खलनाऽज्ञानात् कमप्यपराधं करोति. तत्र विदुषा न मनो देयं. क्षमाशीला हि साधवः. इमं त्वद्विहितमपमानं क्षमे. पुनरप्येवं मा भवत्वेतदर्थं तं चन्दुलालं मदधीनं कुरु इति.

स तु दिल्लीपतिः सन्तुष्ट इव तदंगीकृत्य तं दुष्टं चन्दुलालं तदधीनमकरोत्. गुरुरपि तमादायामृतसरनगरमागत प्रथमं तं राजद्रोहिणमासफखानं नामशेषमकरोत्. ततश्च तं चन्दुलालं दण्डयितुमिच्छुः स्वयं न्यायाधीशो भूत्वा सर्वेषां सज्जनानां पुरतस्तदीयमपराधं निवेद्यान्ते तमवदत्—चन्दुलाल! मम पितुः प्राणत्यागं प्रति भवानेव कारणं. निरपराधी मे पिता न तव कन्यां याचितुमागतः किंतु त्वमेव स्वकन्यास्वीकाराय प्रथमं तमवदः. एवं सत्यपि तं धनाढ्यमदादपमानयित्वा पश्चात्तमेव कारागृहं प्रैषयः. इदमपि ते क्षमार्हं कृत्यमभविष्यद्यदि त्वं परकीयदिल्लीश्वरसाहाय्येन मदीयं पितरं नाहनिष्यः. यः खलु पापः

परकीयसाहाय्येन स्वबन्धून् हन्ति तं सर्वेऽपि बान्धवा महापापिनं मन्यमानाः कदापि तदीयमपराधं न सहन्ते. पिता मे तदैव त्वामवदत्. चन्दुलाल ! निरपराधिनं मां पीडयन्तं त्वां सर्पं मन्यमाना मे बान्धवा अचिरादेव प्राणदण्डेन योक्ष्यन्तीति. तदिदं भवान्न स्मरति. अहं तु सम्यक् स्मरामि. तदधुना नेदृशं कर्मान्योऽपि करोतु इति सर्वान् बोधयितुं त्वं प्राणदण्डेन योक्ष्यसे. पिता च मे सत्यवागभवतु. अनेन दण्डेन संजातोपतापो यदि त्वं भविष्यसि तदा नान्यस्मिञ्जन्मनि एतादृशानि क्रूराणि कर्माणि करिष्यसि. इति.

सर्वोऽपि तत्र मिलितः शीखधर्मानुयायिनां समूहः स्वगुरोर्हरगोविन्दस्येदं वाक्यं निशम्य क्रुद्धः सत्वरमेव तं चन्दुलालं महोल्बणविषं महानागमिव क्रूरैरुपायैरवधीत्.

( ३ )

गुरुर्हरगोविन्द एवंरीत्या प्रतिज्ञां परिपूरयित्वा कृतकृत्यः स्वशक्तिवर्धनाय रात्रिंदिवं प्रायतत. स्थाने स्थाने नूतनानि स्थलदुर्गाणि निर्माय तत्रागणितान् सैनिकानस्थापयत्. तथैव युद्धसामग्रीनिर्माणाय तस्मिन् कर्मणि कुशलानाहूय तां व्यरचयत्. सर्वत्र चोत्तरार्यावर्ते पर्यटन् सर्वेभ्यः स्वकर्तव्यमबोधयत्.

तस्मिन्नेव समयेऽकबरपुत्रो जहांगीरनामा दिल्लीपतिः परलोकं जगाम. तदीयः पुत्रः शहाजहाननामा दिल्लीपतिरभूत्. स च यद्यपि शमप्रकृतिस्तथापि शीखधर्मद्वेषिभिर्महंमदीयैः कलुषीकृतमानसो निभृतं शीखधर्मनाशाय मतिमकरोत्.

अत्रान्तरेऽन्यदपि कलहकारणमभवत्. तदिदं. गुरुरर्जुन

सिंहः परदेशादुत्तमानश्वानानीय स्वयं विक्रयव्यवहारमकरोदिति पूर्वमेव कथितं. तं च महतोत्साहेन तदीयः पुत्रो गुरुर्हरगोविन्दोऽप्यकरोत्. तेनान्यदेशीया वणिज उत्तमाश्वानां विक्रयाय गुरुं हरगोविन्दमन्वागच्छन. गुरुर्हरगोविन्दोऽपि स्वीयमाश्विकबलं विवर्धयिपुस्तेभ्य उत्तमानश्वानक्रीणात्. एकदा शीखधर्मानुयायी कश्चनाश्वव्यवहारी स्वगुरुमुपायनीकर्तुं कतिपयानश्वान गृहीत्वाऽमृतसरनगरं समाययौ.इमां च वार्तां तस्य नगरस्याध्यक्षो महंमदीयधर्मानुयायी निशम्य क्रुद्धस्तं वणिजमाहूय बलादेव द्वावश्वौ जग्राह. स तु दीनो वणिक् गुरोर्हरगोविन्दस्य समीपमागत्य तस्मै सर्वं वृत्तं न्यवेदयत्.

गुरुर्हरगोविन्द इदं वृत्तं निशम्य कोपाकुलः सर्वानपि निजशिष्यानाहूय तावश्वावानेतुमादिदेश. तेषु विधिचन्द्रो नाम शिष्यः सहसोत्थायाश्वानयनप्रतिज्ञामकरोत्. अयं च विधिचन्द्रः परमसाहसिकश्चौरो गुरुणा हरगोविन्देनानुगृह्य सन्मार्गे प्रवर्तितः परं प्रीतिपात्रमासीत्. स चाश्वपालवेषं गृहीत्वा तस्य नगराध्यक्षस्याश्वशालायां स्थितोऽनुकूलं समयं विलोक्यैकमश्वमानीय गुरवे समर्पयत्. अपरमपि आनेतुमनाः स तं वेषं परित्यज्य चौरान्वेषणकुशलो नाम भूत्वा तस्य गृहं गत्वा पश्यतस्तस्य पुरतो द्वितीयमप्यश्वमनयत्. अवदच्च तं-गुरुहरगोविन्दस्य शिष्योऽहमस्मीति.

स तु प्रथमत एव वर्धमानं गुरुहरगोविन्दस्य वैभवमवलोक्य द्वेषेण ज्वलन् स्वाश्वौ तेन नीतावित्यवगम्य क्रोधातिरेकनष्टमतिः सत्वरमेव सेवकमुखेन स्वाश्वदानाय तं गुरुहरगोविन्दमाज्ञा-

पयत्. गुरुर्हरगोविन्दस्तु इमां तदीयामाज्ञामनंगीकृत्याश्वदानं प्रत्यादिदेश.

तदानीमेव स नगराध्यक्षो महता कोपेन स्वनियोगानुपालिन्या राजसेनया समं गुरोर्हरगोविन्दस्य निवासमाचक्राम. गुरुर्हरगोविन्दस्तु सावधानो महता धैर्येण तामापतन्तीं यवनसेनां प्रतिबध्य तथा पराजयत यथा स नगराध्यक्षस्ततः पलायितो दिल्लीनगरमागत्य दिल्लीपतिं साक्षात्कृत्य साहाय्यदानायायाचत.

( ४ )

स तु पराजयदीनवदनः साश्रुलोचनो मुकुलीकृत्य स्वहस्तौ दिल्लीश्वरमवदत्. स्वामिन्! अहं हि न्यायेनोत्तरार्यावर्तं पालयितुं तथा श्रेष्ठेन महंमदेन स्थापितं धर्मं च प्रसारयितुं स्वामिनैव नियुक्तः सावधानेन तत्कर्म चिरात् करोमि. परन्तु यदाप्रभृति अयं शीखनामा धर्मपथ उत्तरार्यावर्ते प्रचलितस्तत आरभ्य न्यायेन शासनं तथा स्वधर्मप्रसारश्च दुष्करोऽभवत्. प्राचीनाः शीखधर्मगुरवः केवलमीश्वरध्यानपराः संसारचिन्तायां परमुदासीना आसन्. परन्तु गुरुमर्जुनसिंहमारभ्य सर्वेऽप्यग्रिमा गुरवो न केवलं व्यावहारिकाः किंतु राजैश्वर्यशालिनः. ते हि सामर्थ्यशालिनः शिष्यलब्धद्रव्यपरिपूर्णकोशाः साम्प्रतं तस्य प्रदेशस्य स्वामित्वमेव वांछन्ति. तथैव प्रयतन्ते च. अधुना हि हरगोविन्दोऽपाराश्विकदलसंपन्नः प्रतिदिनं नूतनानि दुर्गाणि निर्मायात्मानं तद्देशाधिपमेव मन्यते. मादृशा जनास्तस्य स्वामित्वनिराकरणाय प्रयतमानास्तस्य द्वेषास्पदतां यान्ति. सकलभा-

रतवर्षपालकोऽपरैश्वर्यसम्पन्नः साक्षादिन्द्र इव पराक्रमी भवांस्तेषां शासन उदास्ते. तेन ते त्वां दुर्बलं मन्यमाना अधिकमेव प्रबला भवन्ति.

किंच—स्वामिन्! वयमत्र पराक्रमेणैव लब्धराज्या अपि आचारतोऽत्यन्तं भिन्ना एव. अस्मांश्चात्रत्याः सर्वेऽपि जना गूढं द्विषन्ति. ते च यदि दण्डेनैव रक्षिता अवश्यमस्मदनुकूला भवन्ति नेतरथा. तस्मादिमं शीखधर्मं वर्धिष्णुं राज्यापायं मन्यमानः सहसा तन्नाशाय यतस्व. त्वयि च स्वकर्तव्याजागरूके सर्वेऽपि शीखधर्मप्रभृतयः क्षुद्रा धर्मपथा नामशेषा भविष्यन्ति. तत्कृपया मम सहायो भूत्वा तं गुरुं हरगोविन्दं जहि इति.

स तु शहाजहाननामाऽकबरस्य पौत्रः सर्वमिदमाकर्ण्य क्रुद्धस्तारुण्यसुलभोत्साहसमन्वितः सेनापतिमाहूय तं हरगोविन्दं बन्दीकर्तुमादिदेश. तं च धर्माध्यक्षं तेन सहैव प्रैषयत्.

गुरुर्हरगोविन्द इदं सर्वं चारमुखेन प्रथमत एव ज्ञात्वा सावधानो यवनसेनागमनं प्रतिपालयामास. समागतां च यवनसेनां वीक्ष्य योद्धुमारभत. अचिरादेव तां सेनां क्षुब्धैर्व्याघ्रैराक्रान्तस्य हरिणयूथस्य दशामलंभयत्. ते च पूर्वकृत्यानि स्मरन्तः शीखधर्मानुयायिनस्तान् यवनसैनिकान् पराजित्य कांदिशीकांश्चक्रुः. गुरुर्हरगोविन्दस्तां यवनसेनां पराजित्य पुनरपि तदाक्रमणमुत्प्रेक्षमाणः स्वरक्षणार्थं भातियानाम्नि अरण्ये न्यवसत्. तत्र च पुनरपि सर्वं व्यवस्थाप्य कतिपयैर्वर्षैः पुनरप्यमृतसरनगरमाययौ.

दिल्लीश्वरश्च पुनरपि तं प्रत्यागतं निशम्य पुनः सेनां प्रैषयत्. तामपि जित्वा श्रान्तः सम्प्रत्यमृतसरनगरनिवासमनिष्टं मन्यमानस्ततो निर्गत्य काश्मीरपथवर्तिनि पर्वतावलीव्याप्ते हिमालयस्य पादे नूतनमेव कीर्तिपुरं नाम नगरं वासयित्वा तत्रैवोवास. दिल्लीश्वरोऽपि असंख्यसंकटपरंपराव्यापृतचेता न तं मनसि चकार.

एवं स्वपितुः संकल्पं पूरयित्वा समये समये यवनान् पराजित्य लब्धख्यातिर्गुरुर्हरगोविन्दः स्वस्यान्तिमं समयं समुपस्थितमवलोक्य स्वपुत्राणां गुरुपदलाभाय कलहं परिहर्तुं स्वस्य नप्तारं गुरुं हररायं गुरुपदाधीशमकरोत्.






१ शमप्राधान्यम्.
२ दिल्लीपतिकोपः.
३ स्वपुत्रस्य परित्यागः.
४ शीखधर्मानुयायिनां परिस्थितिः.

( १ )

गुरुर्हररायः शीखधर्मगुरुपदं लब्ध्वा न किमप्यचेष्टत. स हि शमप्रधानो राजसीं वृत्तिमंगीकर्तुं नैयेष, स चाबाल्यात् परमात्मध्याने मग्नो निर्मलवृत्तिः सर्वदाऽन्याय्यमार्गप्रवृत्तान् मूढाञ्जनानुपदेशेन सन्मार्गवर्तिनश्चक्रे. यद्यपि स शमप्रधानः सदा शान्त्या परिवर्तमान आसीत्तथापि स्वपितामहेन स्थापितां तथा पित्रा गुरुणा हरगोविन्देन परिवर्धितां सेनां न परितत्याज. समये समये च तां प्रोत्साहयामासैव.

वाचकाः ! गुरोर्हररायस्य शमवृत्तिः शीखधर्मानुयायिनामुत्कर्षायैवाभूत्. इयं हि क्षात्रियवृत्तिः सर्वदा परिसेवमाना याताय प्रभवति. यथा ह्यौषधं सततं सेवमानं रोगाय भवत्येवमेव राजसी वृत्तिः. किंच—यथा ह्यकबरस्य पुत्रस्तथा पौत्रः केवलं विलासमग्नौ राज्यकार्येषु सालसौ नैवं नूतनो दिल्लीश्वरः. नूतनो दिल्लीश्वरोऽकबरस्य प्रपौत्रोऽवरंगजेबनामाऽतिभयंकरः क्रूर-

कर्माऽऽसीत्. अस्मिन् समये यदि गुरुर्हरराय: स्वपितृवद्राजस्या वृत्त्याऽवर्तिष्यत तदा बाल: शीखधर्मो नामशेषोऽभविष्यत्.

अपि च-गुरोर्हरगोविन्दस्य समये ये खलु द्वित्रा युद्धप्रसंगा: संजातास्तेपु यद्यपि शीखधर्मानुयायिन एवं जयमेवालभन्त तथापि वीरहानिर्महत्यभूत्. असंख्या: खलु वीरा: समरांगणे कलेवराणि त्यक्त्वा स्वर्गमगच्छन्. तेन प्रतिदिनं वीरा न्यूना एवाभवन्. यवनाधीशस्तु नानादेशेभ्यो जनानानीय स्वसेनायां स्थापयित्वा पुनरपि तां युद्धार्हामकरोत्. यदि गुरुर्हररायोऽपि यवनाधीशेन सममयोत्स्यत तदा शीखधर्मो निर्वीरोऽभविष्यत्. एतेनाऽपि कारणेन गुरोर्हररायस्य शमवृत्ति: शीखधर्मस्यानुकूलैवाभूत्. एकदाऽयं गुरुर्हरराय: संध्यासमये स्वोपवने पर्यटन् कदाचित्स्वानवधानत: स्वोत्तरीयवस्त्रसंसर्गात्सद्यो विकसितानि पुष्पाणि त्रुटित्वा धरिणीतले पतितान्यपश्यत्. तेन दु:खाकुल: स विवेकी तत आरभ्य सावधानेन तस्मिन्नुपवने पर्यटन्न कदापि कस्यापि वृक्षस्य पत्रं चिच्छेद.

वाचका:! विचित्रोऽयं संसारो यस्मिन् परमात्मा स्वास्तित्वं बोधयितुमिवेदृशानि विचित्राणि कार्याणि करोति. गुरुर्हरगोविन्दस्तु तादृशालौकिकरजोगुणशाली, परन्तु तस्य नप्ता शमप्रधान: केवलमीश्वरभक्तावेव मग्न:. तस्माद्ये खलु कार्यकारणभावेन सर्वं व्यवस्थापयितुमिच्छन्ति तैरस्माद्वृथाव्यापाराद्विरमणमेव वरं. अस्तु.

( २ )

तस्मिन् गुरौ हरराये सुखेन गुरुपदमधिष्ठाय तत्त्वोपदेशं

कुर्वति सति दिल्लीश्वरस्य शहाजहानस्य पुत्रो दारानामाऽतिरुग्णो बभूव. राजवैद्याश्च रात्रिंदिवं प्रयतमाना अपि न यशोऽलभन्त. दिल्लीश्वरोऽपि ज्येष्ठस्य तस्य पुत्रस्य दुःखं विलोक्य खिन्नः परमात्मानं तदारोग्याय प्रार्थयत. स च पुत्रोऽनेन गुरुणा हररायेण बद्धसख्यः स्वरोगं दूरीकर्तुं तं विज्ञापयामास. सोऽपि शीघ्रमेव किमपि औषधं शिष्यहस्तेन तदन्तिके प्रेषयामास. स तु दिल्लीश्वरपुत्रस्तेनौषधेन नीरोगो बभूव. ततःप्रभृति स संजातश्रद्धस्तं गुरुं हररायं गुरुं विधाय तदुपदेशं जग्राह.

अथ शहाजहानो नाम दिल्लीश्वरो रुग्णोऽभवत्. तस्मिन् समये तदीया बलिष्ठाश्चत्वारोऽपि पुत्रा राज्यलोभाकुलाः परस्परमकलहायन्त. तेषु च कपटी कनीयान् पुत्रोऽवरंगजेबनामा पितरं कारागृहे निक्षिप्य स्वयं दिल्लीश्वरोऽभवत्. अन्यौ च हत्वा ज्येष्ठं दारानामकं बन्धुमनुधावन् सर्वत्र प्रचचार. स तु दीनो दारानामा शहाजहानपुत्रः स्वप्राणान्रक्षितुमार्यावर्ताद्बहिर्जिगमिषन्दिल्लीनगरान्निभृतं पलायमान उत्तरार्यावर्तमाजगाम. स तु अवरंगजेबो ज्ञातवृत्तः सत्वरमेवानुदधाव. स च धावितुमप्यसमर्थो दाराख्यो दिल्लीश्वरपुत्रो मित्रं गुरुं हररायं शरणीकृत्य प्राणरक्षणाय प्रार्थयत. सोऽपि दीनवत्सलः स्वानुयायिनः प्रति तस्यावरंगजेबस्य रोधाय समादिश्य तं दीनं दारानामकं दिल्लीश्वरपुत्रं स्वदेशं गमयितुमादिदेश.

अवरंगजेबस्तु तं बन्दिनं विधातुं त्वरया समापतन् मार्गे स्थितान् शीखसैनिकानवलोक्य युद्ध्वा जयं दुर्लभं मन्यमानः स्वनिवासं प्रत्यागच्छत्. गुरुर्हररायस्तु स्वशिष्यैः समं तं दारा-

ख्यं दिल्लीश्वरस्य ज्येष्ठं पुत्रं स्वदेशं प्रापयामास.

अचिरादेव स क्रूरकर्माऽवरंगजेबः सर्वानपि स्वबन्धून् हत्वा स्वराज्यं निष्कण्टकमकरोत्. स च सत्वरमेवान्यानन्यानपि स्वबन्धुपक्षपातिनः सामन्ताननेकैरुपायैः परलोकं गमयित्वा स्वस्थचेता दारारक्षकं गुरुं हररायं नाशयितुमनाः समयं प्रत्यपालयत्.

( ३ )

स च दीर्घद्वेषी पापी निर्दयोऽवरंगजेबः कमप्युत्सवं निमित्तीकृत्य तं गुरुं हररायं राजसभामागन्तुमादिदेश. प्रैषयच्च कंचन सामन्तं सैन्येन समन्वितं तदानयनाय. गुरुर्हररायस्तु तस्य सामन्तस्य मुखात्तस्य नियोगमाकर्ण्य जहास. अहं खलु परमात्मानमेव जगदीश्वरं मन्ये नान्यं कमपि. यदि विस्तीर्णायाः पृथिव्या एकदेशं लब्ध्वा कश्चनात्मानं पृथ्वीपतिं वदेत् तदा नूनं बिलस्थ आखुरपि कुतो न पृथ्वीपतिः स्यात्. सकलमेदिनीपतिर्न परमात्मनोऽन्यः कोऽपि. तदहं तु नागच्छामि. परन्तु यदि स सन्मानेनाह्वयति तदा मम ज्येष्ठः पुत्रो रामरायस्तं द्रष्टुमागच्छेत्. तं गृहीत्वा गच्छेत्यवदत्.

रामरायश्च तेन सामन्तेन समं दिल्लीनगरमागतस्तस्य नगरस्य सौन्दर्यं तथा दिल्लीश्वरस्यैश्वर्यं विलोक्य विस्मितो नियते समये राजसभां गत्वा विस्मृतस्वाभिमान इतरजनवत्तं ववन्दे. कपटी दिल्लीश्वरस्तदीयं स्वभावं लीनतां च वीक्ष्य सन्तुष्ट इव दर्शयंस्तं स्वस्य समीपे स्थापयित्वा तत्पितरं गुरुं हररायं दूतमुखेन–मया हि युष्माकं पुत्रः केनापि कारणेन स्वसंनिधौ स्था-

पितोऽस्ति. तदधुना प्राचीनं वैरं विस्मृत्य सुहृद्भावेन वर्तनीयमिति न्यवेदयत्. गुरुर्हररायोऽपि किमप्यकुर्वंस्तूष्णीं तस्थौ. परन्तु निभृतं साम्प्रतमुत्तरार्यावर्ते दृश्यमानानि 'नाभा–प्रतिआळा' ऽऽख्यानि राज्यानि स्थापयामास.

रामरायस्तु दिल्लीश्वरानुग्रहं लब्ध्वाऽऽत्मानं कृतकृत्यं मन्यमानः स्वयोग्यतां विस्मृत्य केवलं दिल्लीश्वरच्छन्दानुवर्तित्वमेव स्वकर्तव्यममन्यत. यथाऽन्ये सांसारिका उदरंभरयो जनाः कस्यापि वस्तुनो लाभाय धनिकं स्तुवन्ति तथैव तं स्तुवन्नात्मानं धन्यं मेने. तामिमां वार्तामाकर्ण्य दुःखाकुलो गुरुर्हरराय ईदृशदुर्वर्तनत्यागाय तं भूयो भूय उपदिदेश. परन्तु विषयासक्तचेताः पितुराज्ञापालनाद्दिल्लीश्वरमनोऽनुवर्तित्वमेव श्रेयस्करं मन्यमानस्तथैवावर्तत.

एकदा सर्वैः सामन्तैः समं राजसभायामुपविष्टः स कपटी दिल्लीश्वरः समीपस्थं रामरायमपृच्छत्– रामराय ! शीखधर्मस्य परमगुरुर्नानको महंमदीयान् परमद्वेट्. स हि स्वप्रणीते ग्रंथे स्थाने स्थाने तं द्वेषं प्रकटीचक्रे. किमत्र कारणं ? सर्वेषु प्रचलितेषु धर्मपथेषु महंमदीयो धर्म एव श्रेष्ठ इति बालकोऽपि वदेत्. यतोऽत्रेदृशानि तत्त्वानि प्रतिपादितानि सन्ति यानि अन्ये धर्मा ज्ञातुमपि न शक्नुवन्ति. अज्ञा जनाः केवलं पारंपरिकमेव धर्मं समीचीनं मन्यमाना न नूतनमिमं धर्ममनुसरन्ति. तदर्थं च वयं प्रयतामह एव. परन्तु अयं नानकवंश्यस्ते पिता तमेवादिग्रंथं प्रमाणीकृत्य तत्प्रतिपादितमेवार्थं लोकेभ्यः प्रतिपादयति. तस्मिन् ग्रंथे च 'मुसलमान'–शब्देन व्यपदिश्यमाना

महंमदीया एव परं निन्दिताः. तदयं राजद्रोह एव. तत्कथय को वैषां वाक्यानामर्थः ? यद्यहं मन्ये तथा स्यात्तदेमं ग्रंथमग्निसात्कृत्वा तदनुयायिनोऽपि क्रूरेण दण्डेन दण्डयिष्यामीति.

रामरायश्च तस्येदं क्रूरं भाषणं निशम्य भीतस्तं हस्तौ मुकुलीकृत्यावदत्— स्वामिन्! श्रीनानकदेवप्रणीत आदिग्रंथे यत्र यत्र 'मुसलमान'—शब्दोऽस्ति तत्र स पूर्वं नासीत् पश्चात्कैश्चिद्धूर्तैः स निक्षिप्त इति.

दिल्लीपतिस्तु इदं तस्य प्रत्युत्तरमाकर्ण्य सन्तुष्ट इव न किमपि प्रत्युवाच. अथ तां वार्तामाकर्ण्य स गुरुर्हरराय: परं संतप्तस्तं पुत्रं क्रूरेण दण्डेन योजयितुमिच्छुः सर्वानपि स्वशिष्यानाहूय जगाद— वत्साः! मदीयः पुत्रो रामराय इतो दिल्लीनगरं गतस्तदधिपस्यैश्वर्यं प्रेक्ष्य विस्मितः श्वेव तं सेवते. स्वाभिमानहीनो दास इवाहर्निशं तदाज्ञापालनाय दक्षो भवति. गुरुराजस्य श्रीनानकदेवस्य पवित्रां वाणीं मिथ्या वदति. नैतादृशः पुत्रो मे रोचते. मयि स्वर्गं गते स दिल्लीश्वरसाहाय्येन वा युष्माकमनुमत्या वा पवित्रमिदं गुरुपदं मा कलंकयतु इति मे मनीषा. तां मे मनीषां निवेदयितुमेव यूयं सर्वे समाहूताः. तदहमिदं प्रकटीकरोमि यत् नास्ति मम रामरायेण सह कोऽपि संबंधः. स चैतत्पीठानधिकारीति.

सर्वेऽपि शिष्या गुरोर्हररायस्येमामाज्ञां शिरसा स्वीकृत्य यथास्थानं जग्मुः. अचिरादेवेदं वृत्तं दिल्लीनगरस्थो रामरायो निशम्य शोकाकुलः पितुः प्रसादाय दिल्लीश्वरमापृच्छ्यामृतसरनगरमागन्तुं प्रारभत. परन्तु क्रुद्धो गुरुर्हररायस्तं दूतमुखेन

पुरत आगन्तुं प्रतिषिध्य जगाद-कुलकलंक! जननीजठरभारभूत! पुत्रापसद! यस्य पीठस्य सेवया त्वयाऽस्मिल्लोके जीवितव्यं, तस्य पीठस्याद्यस्थापकमेव गुरुराजं नानकदेवं मिथ्यावादिनमवदः! पाप! तस्मिन् काले तव वाक् कुतो न विनष्टा! जिव्हा वा न विशीर्णा! दुर्मते! यस्य क्षुद्रस्य पापमलिनमतेः पितृघातकस्य भ्रातृनाशकस्य मिथ्यावादिनो दिल्लीश्वरस्यावरंगजेबस्य कोपभयेन स्वपूर्वजं परममान्यं नानकदेवमपि त्वमदूषयस्तन्मां त्वं कथं गणयिष्यसि? नीच! ईदृशी ते विषयलोलुपता त्वामधर्मं कथमकरोत्. दिल्लीश्वरो नेश्वरः. यस्त्वं चराचरपालकं परमात्मानमप्रमाणीकृत्य दिल्लीश्वरं प्रमाणं चकर्थ, स त्वं कथं परमात्मभक्तस्य मे पुत्रो भवितुमर्हसि? मूढमते! न केवलं शरीरजननात् पुत्रः पुत्रो भवति किंतु पुत्रधर्माचरणात्. बहवः कीटा अस्माज्जडाद्देहात् प्रतिदिनं बहिरागच्छन्ति न तान् कोऽपि पुत्रपदेन व्यपदिशति. पुत्रधर्मश्च पितृसेवाविधानं. सेवा च न शरीरस्य भवति. तां च सेवकोऽपि करोति. तथा च पिता महता कष्टेन पुत्रं जनयित्वा ततः स्वसंतोषमेव याचते नान्यत्. यो हि पापः स्वपितरं स्वसुकर्मभिर्न सन्तोषयति तं कीटं पुत्रपदेन न सज्जना व्यपदिशन्ति. दुरात्मन्! दिल्लीनगरे राजसभायां सर्वेषां जनानां पुरतः श्रीगुरुराजस्य वाणीमन्यथा वदता त्वयाऽहं पीडितो वा न वेति स्वयमेव विचारय. अनेन मे वचनेन वृद्धो मे पिता कियद्दुःखभाक् स्यादिति मनस्यपि नाकरोः. तत्त्वं मे कथं पुत्रः स्याः? यो हि तव तेन दुष्टवचनेन सतुष्टो बभूव स एव दिल्लीश्वरस्ते पिता भवतु. तादृशं पितरं लब्ध्वा

तवात्यन्तं प्ररूढा विषयलालसा तु तृप्येत्. विरक्तस्य निर्धनस्य मम पुत्रो भूत्वा कस्ते लाभः? तदमृतसरनगरागमनाद्विरम. दिल्लीपतिमेव शरणीकृत्य तत्रैव निवस. स एव च ते सर्वामिच्छां पूरयिष्यति इति.

वाचकाः! किमिदं नापूर्वमुत्तरं? प्रतिदिनं हि पशुभ्योऽपि हीनमतयो मानवाधमा अपकारिणो व्यसनाधीनान् यथेच्छं वर्तमानानपि पुत्रानवलोक्य खिन्ना अपि पुनः पुनः पुत्रमोहाकुलास्तानेव स्वपुत्रान् मन्यमाना दुःखभाजो भवन्तीति वयं पश्यामः. दुर्लभास्ते ये च सम्यक् प्रबोध्याऽपि कुमार्गगामिनः स्वपुत्रानपुत्रानेव मन्यमानाः. अशक्यो हि मोहपटलच्छेदः. स च यैरनुष्ठितस्त एव तत्त्वज्ञा वन्दनीयाः. ये तु पुनः पुनः पुत्रापसदैर्बाध्यमाना अपि मोहाकुलाः पूर्ववद्वर्तन्ते तेषां शुनां च नास्ति भेदः. अस्तु. रामरायस्तु इदं स्वपितुर्गुरोर्हररायस्य तेजस्वि प्रत्युत्तरमाकर्ण्य खिन्नमना अमृतसरनगरगमनं संप्रति निष्फलमनर्थावहं चेति मन्यमानस्तत एव न्यवर्तत. दिल्लीश्वरसमीपमागत्य सर्वां वार्तां कथयित्वा तत एव धनं लब्ध्वाऽतिष्ठत्. धूर्तो दिल्लीश्वरोऽपि भविष्यति किंचिदनेन प्रयोजनमिति मन्वानः परमानन्देन तमनुजग्राह.

(४)

गुरुर्हररायः स्वज्येष्ठपुत्रं रामरायमपुत्रं विधायावशिष्टं हरकिसननामानं द्वितीयं पुत्रं गुरुपदाधीशमकरोत्. तस्मिन् समये सर्वेऽपि शीखधर्मानुयायिनस्तस्मिन्नमृतसरनगरे संमिलिता आसन्. ते च स्वगुरोर्हररायस्य विलक्षणमात्मसंयमनसामर्थ्यं तथा

निस्पृहतां चावलोक्य विस्मिताः परमादरेण तं नूतनं हरकिसनं स्वगुरुममन्यन्त. तदानींतनाः सर्वेऽपि भारतवासिनस्तस्य दिल्लीश्वरस्यावरंगजेबस्य क्रौर्यं तथा परधर्मासहिष्णुतां चावेक्ष्य भीत्याकुलाः कर्तव्यमूढा अजायन्त. बलाढ्या अपि आर्यधर्मानुयायिनो रजपूतक्षत्रियप्रभृतयस्तेन दिल्लीश्वरेण वैरायमाणा योद्धुमत्युत्सुका अभवन्. दीना अन्यजनाश्च महंमदीयधर्मानंगीकारापराधं निमित्तीकृत्य तेन राज्ञा दण्डिताः स्वरक्षणाय परमात्मानं प्रार्थयन्त. स्वयं राजनि प्रजाविरोधिनि सति अन्येऽपि क्षुद्रा यवनाः सनातनधर्मानुयायिनः प्रकटं पीडयामासुः. उत्तरार्यावर्ते तत्रभवता हरगोविन्देन विहितसंस्काराः शीखधर्मानुयायिनो बलाढ्याः शस्त्रव्यवहारज्ञाः प्रतीकारक्षमा आसंस्तेन न तांस्ते यवना अति पीडयामासुः. बलाढ्या अपि शीखधर्मानुयायिनश्चतुरेण समयज्ञेन शान्तेन गुरुणा हररायेण नियंत्रिता रक्षाच्छादिता वन्हय इव स्वीयां प्रतीकारशक्तिं निभृतं परिवर्धयन्तोऽतिष्ठन्. वाचकाः ! यः खल्वग्रे शीखधर्मानुयायिनां तेजःप्रकर्षोऽनुभूतस्तं तेजःप्रकर्षमस्मिन् समय एव सर्वे ते समपादयन्.





# गुरुर्हरकिसनः

१ ज्येष्ठबन्धुना सह कलहः.
२ दिल्लीनगरगमनम्.
३ दिल्लीपत्यन्तःपुरगमनं.
४ अकाले स्वर्गवासः.

( १ )

दिवंगते गुरौ हरराये तदीयं कनिष्ठं पुत्रं गुरुं हरकिसनं गुरुपदाधिष्ठितमवलोक्य खिन्नस्तदीयो ज्येष्ठो बन्धुः 'रामरायः' गुरुपदलोभाकुलः प्रथमतो निभृतममृतसरनगरमागत्य सुवर्णमन्दिरस्य व्यवस्थापकेषु शीखधर्मानुयायिषु मध्ये कांश्चित्स्वानुकूलान्विधातुं प्रायतत परन्तु ते सर्वेऽपि रामरायस्य पूर्ववृत्तं स्मरन्तो गुरुपदारोहणायोग्यतां च जानन्तो न तस्यानुकूला अभवन. ते च तं प्रत्यवदन्—रामराय! जीवति तव पितरि गुरौ हरराये यदि त्वं तस्य दिल्लीश्वरस्य भीत्या मिथ्याऽवदः स्वधर्म्मग्रंथमपि मिथ्यावादिनमभाषथास्तदा सम्प्रति विषयलोभाकुलो यथेच्छं वर्तिष्यस एव. तस्माद्दूरदर्शी ते पिता त्वां तदैव गुरुपदानधिकारिणमकरोत्. अधुना पूर्ववद्दिल्लीश्वरस्य कृपां संपाद्य जीवेति.

अथ निराशः स रामरायः शीखधर्मानुयायिनां मध्ये भेदं दुष्करं मन्यमानो दिल्लीनगरं प्रत्यागतस्तं दिल्लीपतिं साक्षात्कृत्य जगाद—राजराजेश्वर ! युष्माकं समीपे तिष्ठन्नहं पितृरोषपात्रमभवम्. मदीयाः शत्रवस्तं बालं हरकिसनं गुरुपदाधिकारिणं कृत्वा मां ततो निरवासयन्. पिता मे हररायो यद्यपि शमप्रधान आसीत्तथापि अन्ये शीखधर्मानुयायिनो राजसस्वभावा एवासंस्ते च गुरोर्मम पितुराज्ञामुल्लंघयितुमसमर्थास्तूष्णीमतिष्ठन्. इदानीं च लब्धावकाशास्ते तं बालं गुरुपदाधिष्ठितं विधाय स्वाभिलषितं पूरयितुं यतन्ते. तेषां चायमभिलाषः—युष्माकं सत्तां विनाश्य शीखधर्मानुयायिनां सत्तोत्तरार्यावर्ते स्थापनीयेति. तद्यदि स्वामी यत्किंचिदपि मे साहाय्यं करिष्यति तदा तान् सर्वानपि क्रूरेण दण्डेन दण्डयित्वा तव सत्तां दृढमूलां करिष्यामि. मम साहाय्यं च सेनाबलदानेनैव करणीयमिति.

वाचकाः ! पश्यत लोभस्य माहात्म्यं. यं हि रामरायं तदीयः पितैव गुरुर्हररायो गुरुपदानधिकारिणमवदत्, यं च सर्वेऽपि शीखधर्मानुयायिनो गुरुत्वेन स्वीकारे विमुखा आसन्, स एव पापी रामरायो यवनराजसाहाय्येन गुरुर्भवितुमैच्छत्. सज्जनाः ! लोभाकुलो मानवः कर्तव्याकर्तव्ये अपि न जानाति. दुष्टोऽवरंगजेबो गुरुपदलाभाय मां साहाय्ययेदिति कथं रामरायोऽमन्यत ? सारासारविवेकशून्यो लोभी मानवः स्वलोभपूरणाय यं कमपि प्रार्थयञ्जगति रामरायवदुपहसनीयतां व्रजति. अस्तु.

दिल्लीश्वरोऽवरंगजेबस्तस्य वचनं सत्यमिति मन्वान एव

तं गुरुं हरकिसनं दिल्लीनगरागमनायादिदेश. स्वसामन्तं तदानयनाय सैन्येन समं प्रैषयच्च.

( २ )

स च सामन्तः कतिपयदिवसैरमृतसरनगरमागत्य तस्मै बालगुरवे हरकिसनाय राजाज्ञां न्यवेदयत. स तु बालोऽपि निर्मलबुद्धिः कर्तव्यं सम्यक् जानन्नपि स्वप्रमुखशिष्यगणानाहूय किं कर्तव्यमित्यपृच्छत. तेऽपि च स्वगुरोर्योग्यतां जानन्तो दिल्लीनगरगमनमेव श्रेयस्करमित्यवदन. ततश्च स्वमातरमापृच्छ्य तदाशीर्वादानेव पाथेयत्वेन गृहीत्वा कतिपयशिष्यैः समं दिल्लीनगरमागन्तुं प्रावर्तत.

मार्गे चैकदा कस्याश्चिन्नद्यास्तीरे विश्रान्त्यर्थं गुरुर्हरकिसनः स्वानुयायिभिः सममवातरन. तत्र च कश्चित्पण्डितंमन्यो विप्रो बालं तं गुरुमवलोक्य विस्मितः सहासमवदत–गुरुश्रेष्ठ ! त्वं गुरुरेवासि उत किंचिज्ज्ञानास्यपीति. स तु तेजस्वी तदपमानकारकं भाषणं निशम्याऽपि शान्तः स्वसमीपस्थं शिबिकावाहकं गीताव्याख्यानाय समादिदेश. स तु तदादेशं प्रमाणीकृत्य तथा गीतार्थं न्यरूपयद्यथा तं श्रुत्वा स विप्रो लज्जाधोवदनस्तं बालं गुरुं प्रणिपत्य स्वनिवासमगात.

अथ कतिपयदिवसैर्गुरुर्हरकिसनो दिल्लीनगरमागत्य नियते समये दिल्लीश्वरं ददर्श. स च रामरायवद्दिल्लीनगरवासिनां तथा तदधिपस्य चैश्वर्यमवलोक्य न व्यस्मयत. नापि लोभाकुलो बभूव. स तु स्वयोग्यतानुरूपं वर्तमानः सर्वानपि दिल्लीश्वरप्रधानामात्यानतोषयत. कपटी दिल्लीश्वरोऽपि तदीयं वैराग्यपूर्णं

भाषणं तथा निस्पृहतां चावलोक्य संजातमोदः समीपस्थं राम-रायमवदत्—रामराय ! अयं ते कनीयान् बन्धुरेव गुरुपदार्हो न त्वं. यो हि गुरुपदलाभे मदीयं साहाय्यं याचते स कथं गुरुपदार्हः स्यात् ? रामराय ! गुरुपदं च राजपदादपि श्रेष्ठं तादृशीमलौकिकीमेव सामग्रीमपेक्षते. यथा हि राजपदं शस्त्राणां बलेन लब्धुं शक्यं न तथा गुरुपदं. तत्र केवलं वैराग्येण दीन-प्रेम्णा च लभ्यं. युक्तमपीदं. यथा हि राजपदं बलात्कारेण विरोधिनो जित्वा निर्मितं तथेदं न. इदं तु सात्विकानां परोप-कारतत्पराणां शिष्याणामनुरागेण निर्मितं. तत्तादृशसाधनसाम-ग्रीमसंपाद्य लौकिकेन साधनेन तद्गुरुपदं स्वाधीनं कर्तुमिच्छु-स्त्वं लोके परमुपहसनीयतां गमिष्यसि. तत्तां सामग्रीं संपाद-यितुं यतस्व. किंवा गुरुपदप्राप्तीच्छां वा त्यजेति. उक्त्वा चेत्थं स दुष्टोऽपि अवरंगजेबस्तमेव हरकिसनं गुरुपदाधिकारिणं व्यधात्.

( ३ )

अथ सर्वस्मिन्नपि दिल्लीनगरे तस्य बालगुरोर्हरकिसनस्या-चिरादेव कीर्तिः सर्वतोमुखी बभूव. तेन तद्दर्शनोत्सुका जनाः प्रतिदिनं तन्निवासमागच्छन्. बालगुरुर्हरकिसनोऽपि तान् मधुर-वचनैः सन्तोपयंस्तेषामन्तःकरणानि जहार.

तामिमां वार्तां निशम्य दिल्लीश्वरस्यान्तःपुरवासिन्यः ललना अपि परं विस्मितास्तद्दर्शनार्थं दिल्लीश्वरं विज्ञापयामासुः. सोऽपि तदीयां चित्तवृत्तिं जानन् महताऽऽनन्देन तदाव्हानमंगी-चकार. ततश्च ताः सर्वा अपि मिलित्वा प्रधानामात्यमुखेन तं

बालगुरुं स्वनिवासागमनाय विज्ञापयन्ति स्म. स्वीकृताभ्यर्थनो हरकिसनो नियते समये तेन प्रधानामात्येन समं दिल्लीश्वरस्यान्तःपुरं जगाम.

सर्वा अप्यन्तःपुरवासिन्यो दिल्लीश्वरस्य कान्तास्तं बालगुरुं परीक्षितुकामाः सर्वा अपि स्वस्वासनेपूपविष्टास्तस्योपवेशनार्थमासनमेव नास्थापयन्. चतुरो बालगुरुर्हरकिसनः सलीलमागत्य स्वासनमपश्यन्विस्मितः ज्ञाततदाशयः क्रमेण सर्वा अपि ता दिल्लीश्वरकान्ताः पश्यन् मुख्यायाः कान्ताया अंकमारुह्यावदत्. इयं खलु मे माता. केवलं युष्माभिर्मम मनसः परीक्षणायेदं सर्वं कृतमिति पूर्वमेव मया ज्ञातं. प्रायः सकलभारतभूपुत्राः परस्त्रीः स्वमातॄरेव मन्यन्ते. मातः ! यो हि परस्त्रीषु मातृवद्वर्तितुमपि न जानाति स कथं शीखधर्मगुरुर्भवितुमर्हति ? इदानीं चाहमपरस्या मातुरंकमारूढो महत्सुखमनुभवामीति.

ताः सर्वास्तत्रोपविष्टा दिल्लीपतिकान्तास्तस्य चातुर्यं तथा वचसो माधुर्यं चावलोक्यातिसंतुष्टास्तं परमादरयन्. सोऽपि ततो निर्गतः कतिपयदिवसैर्दिल्लीश्वरमापृच्छ्यामृतसरनगरमागच्छत्.

(४)

एवंवृत्ते कतिपयमासगणेऽकस्माच्छीखधर्मानुयायिनां दुर्दैवतः सप्तमे वर्षे स तेजस्वी बालगुरुर्हरकिसनः स्वर्गमगच्छत्. रोगाक्रान्तमात्मानमचिरायुषमवगत्य विचारी स बालगुरुः सर्वानपि स्वधर्मानुयायिन आहूय जगाद—महती मे वांच्छाऽऽसीत् यदस्मिञ्जगतीतले शीखधर्मस्य प्रसारः कर्तव्य इति. परन्तु अकाले मां स्वर्गं नयता विधिना सा न सफलीकृता. वस्तुत-

स्तु महाप्रभावस्य गुरुराजस्य श्रीनानकदेवस्य कृपयाऽयं धर्म-वृक्षः परिवर्धेतैव. यूयमपि सर्वदैव सन्मार्गवर्तिनो धर्मेण वर्त-ध्वम्. यो हि न्यायेन वर्तते स एव जीवति नान्यायेन वर्तमा-नः. वत्साः ! यथा युष्माकं पूर्वजा न्यायेन वर्तमाना दुर्लभां कीर्तिमलभन्त, तथैव यूयमपि यशोजीवा भविष्यथ. मम पश्चा-द्बकालाख्यग्रामवासी कश्चनासाधारणो मनुष्य इदं गुरुपदमलं-कृत्य शीखधर्मं समुज्ज्वलयिष्यतीति.

शिष्याश्च तदाज्ञापालनतत्पराः शोकं विहाय गुर्वाज्ञापा-लनतत्परा अतिष्ठन्.





# महात्मा तेगबहादुरः

## ( पूर्वो भागः )

१ पूर्ववृत्तम्.
२ गुरुपदलाभः.
३ शत्रुभिः समं कलहाः.
४ दिल्लीपतिरोषः.

( १ )

दिवं गते बालगुरौ हरकिसने सर्वेऽपि बकालाग्रामवासिनो जना गुरुपदलोभाकुला गुरुपदारोहणार्थं प्रायतन्त. तेन सर्वेऽपि शीखधर्मानुयायिनः संशयाकुलाः किंकर्तव्यतामूढा अभवन्. उपस्थितेषु सकलेषु तेषु कोऽपि तादृक् वैराग्यशाली गुरुपदारोहणयोग्यो नासीत्. ते च केवलं शिष्योपनीतोपायनलाभेच्छयैव गुरुपदमवांच्छन्.

वाचकाः! अस्मिञ्जगतीतले सर्वेऽपि जना गुरवो भवितुं वांच्छन्ति. परन्तु सत्यो गुरुः सुदुर्लभ एव. यो हि शिष्यजनस्याज्ञाननिराकरणार्थं रात्रिंदिवं प्रयतते, यश्चाज्ञानिनो घोरमोहदुःखे पच्यमानान्विलोक्य दुःखायमानस्तेषां दुःखं दूरीकर्तुं स्वात्मानमपि वितरति, स एव सत्यो गुरुः. इतरे त्वज्ञानिशि-

ष्यद्द्रव्यहरणोत्सुका वेषान्तरमास्थिताश्चौरा एव. इह भारतवर्षे यानि खलु धर्मपीठानि विद्यन्ते तानि खलु धर्मस्य रक्षणाय महात्मभिः स्थापितानि. परन्तु विपरीतेऽस्मिन् काले तान्येवायोग्यैः पुरुषैरधिष्ठितानि महतीं हानिं कुर्वन्ति. एते खलु धर्मगुरुपदानर्हा जनाः स्वयं दुराचारैरन्यानपि कुकर्माण्याचरितुं प्रोत्साहयन्ति. धन्यास्ते ये खलु वैषयिकं लोभं विहाय परमात्मसेवानिमग्ना गुरुपदानि विषवन्मन्यमाना एकान्तवासाय स्पृहयन्तः सर्वदैवात्मज्ञानसंपादनाय प्रयतन्ते. धन्यतमाश्च तादृशं ज्ञानं संपाद्य कृतकृत्या महात्मानः. अस्तु.

यदा बालगुरुर्हरकिसनः स्वर्गमगच्छत्तदारभ्य सर्वेऽपि शीखगुरुपदलाभार्थमन्ये क्षुद्रा जना अपि प्रायतन्त. तेन सामान्याः शीखधर्मानुयायिनः स्वधर्मरक्षकस्य गुरोरलाभेन चिन्तामग्ना अभवन्. परन्तु अमृतसरनगरस्थसुवर्णमन्दिरस्य पालकाः शिष्या निस्पृहास्तादृशपदयोग्यं नरवरं शनैःशनैरन्वैषयन्.

एवं व्यतीतेषु केषुचिद्दिवसेषु दिल्लीनगरस्थो बलाढ्यः सुखननामा श्रेष्ठी गुरुनिर्णयार्थं प्रयतमानो निभृतं बकालाग्रामं गत्वा तत्रस्थान् सर्वानपि सोढीवंशसंभवाञ्जनानपश्यत्. स च चतुरः सर्वानपि वीक्ष्यैकां व्यक्तिं विना सर्वानपि अयोग्यानवदत्. सैषा व्यक्तिर्महात्मा तेगबहादुर एव.

मान्यः षष्ठः शीखधर्मगुरुर्हरगोविन्दो यदा स्वनप्तारं गुरुहररायं स्वपीठाधीशमकरोत्तदा तदीया पत्नी सती नानकीदेवी स्वपतिं व्यज्ञापयत्— नाथ ! इमं कनीयांसं तेगबहादुरसंज्ञकं त्वदीयं पुत्रं शुभेनाशीर्वादेनानुगृहाणेति. स तु परमतेजस्वी

स्वपुत्रस्य तेगबहादुरस्य योग्यतां तथा शुभं दैवमालक्ष्य सन्तुष्टः प्रत्युवाच- भार्ये! प्रीतोऽस्मि त्वदीययाऽनया विज्ञप्त्या. मनुष्यो हि यथासंचितैः कर्मभिर्भाग्योदयं लभते न तथाऽन्येन केनापि कारणेन. मातापितरौ हि केवलं जन्मदायिनौ. अयं हि ते पुत्रोऽचिरादेव भाग्योत्कर्षं लभेतेति मन्ये. तद्यदा चास्य भाग्योदयः स्यात्तदा तस्मै नूतनानीमानि वस्तूनि वितरेति. उक्त्वा चेत्थं स गुरुर्हरगोविन्दः स्वकान्तायै तीक्ष्णमेकं खड्गं, एकं महावस्त्रं, एकां मौक्तिकमालां च प्रादात्. नानकीदेव्यपि स्वपतेर्वचसि विश्वस्ता तादृशं समयं प्रत्यपालयत्.

( २ )

यदा च स सुखननामा श्रेष्ठी बकालानामकं ग्राममागच्छत्तदा तत्र सती नानकीदेव्यपि तेन तेगबहादुरेण समं न्यवसत्. सा च स्वपुत्रं सम्यक् शस्त्रविद्यायां शिक्षयित्वा परमात्मसेवायां प्रावर्तयत. सोऽपि भाग्यशाली मातुराज्ञां शिरसा पालयंस्तदानुकूल्येनावर्तत. सा नानकीदेवी स्वपुत्रं तथाऽशिक्षत यथाऽचिरादेव तेगबहादुरो दयालुत्वेन तथा दानशौण्डत्वेन सर्वत्र विख्यातोऽभवत्. यदा च गुरुर्हरकिसनः स्वर्गमगच्छत्तदा सर्वेऽपि तदीयाः सुहृदस्तथा शिष्यगणास्तमग्रेसरं विधाय शीखधर्मपीठलाभाय प्रयतितुमैच्छन् परन्तु प्रकृत्यैव विरक्तः स तादृशगुरुपदलाभार्थं प्रयतमानांस्तान्न्यषेधीत्. अवदच्च-गुरुराजनानकदेवेन स्थापिते पीठे स्थातुमहं सर्वथाऽयोग्य इति.

स तु श्रेष्ठी परममान्यैः शीखधर्मानुयायिभिः समं तं बकालाग्राममागतस्तं परमात्मसेवानिमग्नं योग्यं तेगबहादुरमालोक्य

सन्तुष्टस्तदानीमेव मूर्तां शीखधर्मकीर्तिमिव मुक्तामालां तदीये कण्ठे निक्षिप्य तं गुरुत्वेन व्यपादिशत्. स तु विनयेन तं सन्मानं यदा स्वीकर्तुं नैच्छत्तदा ते सर्वेऽपि सुखनसाहप्रभृतयः शीखधर्मानुयायिनस्तं विज्ञापयामासुः. गुरो ! प्रथमतस्त्वमसि महाभागस्य शौर्यवैराग्यनिधेर्हरगोविन्दस्य पुत्रः पितृवत्सर्व-कल्याणगुणोपेतः. तद्यदि त्वमात्मानं गुरुपदायोग्यं मन्यसे तदा त्वदीयः पिताऽपि गुरुपदायोग्य आसीदिति प्रदर्शितं भवति. नचैतत्कस्याप्यनुमतं. तद्यदि भवांस्तं पूज्यं हरगोविन्दं गुरुपद-योग्यं मन्यते तदा त्वमपि योग्योऽसि. श्रेष्ठ ! यदि त्वं गुरुपदं न स्वीकरिष्यसि तदा कश्चनाऽयोग्यस्तल्लब्ध्वा सर्वमपि शीखधर्मं नामशेषं करिष्यति. तदस्मदनुग्रहार्थमपि त्वया गुरुपदं स्वीक-रणीयमेवेति.

तस्मिन् समये सती नानकदेव्यपि पुरतः समागता स्वपुत्रमवदत्—वत्स ! इदं हि पितुस्ते संकल्पस्य फलं. तव बाल्ये यदा ते पिता मया शुभाशीर्वाददानाय विज्ञप्तस्तदा त्वदीयः पुत्रः शीघ्रमेव गुरुपदं लभेतेति उक्त्वा कमपि प्रसादमपि व्यत-रत्. तमिमं प्रसादं गृहीत्वा त्वं गुरुपदमलंकुरु. पितृकृपया न काऽपि हानिः स्यात्.

किंच—त्वमसि श्रीगुरुराजनानकदेवस्य वंश्यः. सर्वस्यापि वंशसंभवस्य मानवस्य प्रथममिदं कर्तव्यं यत् स्वपूर्वजानां कीर्तिवर्धनं. यो हि पवित्रे वंशे संभूतः स्वपूर्वजानां कीर्तिं न वर्धयति तस्य जननीजठरभारभूतस्य जन्मैव मा भव-त्विति विद्वांसो जना मन्यन्ते. यद्यपि कश्चन तद्वृद्धावसमर्थः

स्यात्तदा तेन स्वपूर्वजकीर्तिपालनं तु कर्तव्यमेव. वत्स! यथ हि तुभ्यं मान्योऽयं शीखधर्मो रोचते तथैवैभ्योऽपि. एतेऽपि नान कवंशजा एव. तदेषामग्रेसरो भूत्वा शीखधर्मं परिपालय. इमे महंमदीया अस्मान् शीखधर्मानुयायिनः परं द्विषन्ति. तत्साव धानेन वर्तमानः स्वपितुः कीर्तिं धवलयन् सर्वानपि सन्तोपयेति

महात्मा तेगबहादुरश्चेमां मातुराज्ञामंगीकृत्य तद्दत्तमुपायन प्रतिजग्राह. सर्वेऽपि तत्र मिलिताः शिष्यास्तं गुरुं मन्वाना यथा शक्ति उपायनानि वितेरुः.

( ३ )

सर्वस्मिन्नुत्तरार्यावर्ते शीखगुरुपदलाभाय प्रयतमाना अग णिता जना 'महात्मा तेगबहादुरो नाम गुरोर्हरगोविन्दस्य कनिष्ठः पुत्रः शीखगुरुपदमलभत' इति सर्वत्र प्रसृतां वार्ता निशम्य दुःखाकुला असूयया प्रज्वलन्त इवानल्पतरं द्वेषमबध्नन् तेषु केचन रात्रौ निभृतं तदीयं गृहमाक्रम्य सर्वमपि वस्तुजात अहरन्. केचित्तस्य प्राणहरणाय शस्त्रपाणीन् प्रैषयन्. अन्ये तु तस्यापयशोवर्धनाय मिथ्याभूतानि स्वकपोलकल्पितानि तदीयदु राचारवर्णनानि सर्वत्र अगायन्. वाचकाः! ये खलु सज्जनास्तेष शत्रवोऽप्यधिका एव. महात्मा तेगबहादुरो न स्वयं गुरुपदमवा च्छत् परन्तु निपुणैः शीखधर्मानुयायिभिस्तदीयां योग्यतां वीक्ष्य तस्मै गुरुपदं वितीर्णं. अत्र तु कस्तस्यापराधः? परन्तु दुर्जनाना मयं स्वभावो यत्ते स्वाभिलषितं दुर्लभं मन्यमानास्तद्यो लभते तमेव द्विषन्ति. महात्मा तेगबहादुरः सर्वतः समुपस्थितान शत्रूनवेक्ष्यापि निर्भयः सदैव परमात्माराधनतत्परः सावधान

एवावसत्. लोभी रामरायस्तु दिल्लीपतिमाश्रितो नानाविधाः स्वयंकल्पिताः कथास्तस्मै कथयित्वा तद्द्वारा गुरुं तेगबहादुरं पीडयितुमैच्छत् परन्तु अन्यत्र व्यग्रमना दिल्लीश्वरो न तदीयां वाचमशृणोत्. ततश्च कतिपयैरेव मासैः सर्वैः स्वशिष्यैः समं महात्मा गुरुस्तेगबहादुरः परमपवित्रं शीखधर्मस्य क्षेत्रममृतसरनगरमाजगाम. तत्र क्षुद्रैः सुवर्णमन्दिररक्षकैर्द्वेषान्निवारितप्रवेशस्ततो निर्गतः कर्तारपुरस्य समीपे 'आनन्दपुरं' नाम नूतनमेव नगरं वासयित्वा तत्रावसत्. अचिरादेव यथा यथा वसन्तकाले चंपककुसुमानां परिमल इव गुरुतेगबहादुरस्य सद्गुणानां परिमलः सर्वत्र प्रससार, तथा तथा मकरंदलोभाकुला भृंगा इव ज्ञानलोलुपाः शिष्याः सर्वतस्तत्रागच्छन्. सत्वरमेव सर्वस्मिन्नप्युत्तरार्यावर्ते व्याप्तस्तदीयो यशस्तोमस्तदीयान् शत्रूनामशेषानकरोत्. सर्वेऽपि शीखधर्मानुयायिनस्तादृशस्योत्तमगुरोर्लाभात्सन्तुष्टा उत्साहेन स्वस्वकार्याण्यकुर्वन्.

( ४ )

एवं सर्वत्र प्रसृतां शीखधर्मगुरोर्महात्मनस्तेगबहादुरस्य कीर्तिमाकर्ण्य दिल्लीश्वरोऽवरंगजेबः शंकाकुलस्तत आत्मनो राज्यस्यापायमाशंकत. स च पापी दिल्लीश्वरः स्वयं राज्यलोभाकुलः स्वपितरं तथा ज्यायसो बन्धूनवधीत्. तेन सोऽसकृदात्मसदृशं जगन्मन्यमानः शान्तादपि स्वराज्यस्य बाधां शशंके. महात्मनस्तेगबहादुरस्य समये तु दक्षिणापथवर्तिना बलाढ्येन शिवराजेन पराजितः स परं दुःखाकुलो बभूव. तं चापमानरोषं यत्र कुत्रापि निक्षेप्तुमनाः स्थानमेवापश्यत्. तदानीमेव पापी रामरायः पुनः

पुनस्तस्य मतिं कलुषीकृत्य तं सात्विकं परमात्मसेवारतं धर्मगुरुं तेगबहादुरं नाशयितुं प्रायतत. सज्जनाः! अतिशुभ्रस्यापि वस्त्रस्य कज्जलसंसर्गेण दोषः संभवति तदा किमु वक्तव्यं स्वयं कृष्णस्य. अवरंगजेबस्तु क्रूरकर्मा मलिनमनाः सततं निन्दां तथा राजद्रोह-कर्माणि कथयतस्तस्य पापस्य रामरायस्य संसर्गेण कलुषितमतिर-भूदिति नाश्चर्यं. दिल्लीनगरवासिभिस्तथा शीखधर्मपक्षपातिभिः प्रधानराजपुरुषैर्विज्ञप्तोऽपि दिल्लीश्वरस्तं राजद्रोहिणं मन्यमानस्त-दानयनाय सेनया समन्वितं सेनापतिं प्रैषयत्. वाचकाः! ये खलु जनाः स्वयं राजद्रोहिणस्तेभ्य एव सर्वत्र राजद्रोहो भासते नानेभ्यः. अयं चावरंगजेबः स्वयं पितृद्रोही बन्धुद्रोही राजद्रोही नाम भूत्वा सर्वमपि वस्तुजातं स्वद्रोह्यमन्यत. यथा हि कामलदोषदूषितलोचनः सर्वमेव पीतं पश्यति तद्वदेवेदमपि. परन्तु प्रजापालके राज्ञि राजद्रोहपिशाचिकाग्रस्तेऽनाथा जना वृथा प्राणान्मुंचन्ति. तत एव भक्तवत्सलः परमात्मा केनाऽपि रूपेणावतरति. अस्तु.

अजातशत्रुः सरलहृदयः परमात्मनिष्ठो महात्मा तेगबहा-दुरस्तां दिल्लीश्वरस्याज्ञां प्रमाणीकृत्य दिल्लीनगरमागन्तुं प्रावर्तत. बहवः सज्जनाः शिष्या अवरंगजेबस्य स्वभावं जानन्तो दिल्ली-नगरं गन्तुं तं प्रत्यबध्नन्. परन्तु सत्यपक्षपातित्वं स्वस्य मनसि कुर्वाणः स नोपारमत. तं च समागतं स्वल्पमपि सत्कारैरसं-भाव्येतरजनवद्राजसभामागन्तुमाज्ञापयत्. मानापमानावगण-यित्वा समागतं तं तेजस्विनं शीखगुरुमालोक्य स क्रूरो यावत्कि-मपि वक्तुमारभते तावदेव चतुरः कार्याकार्यविवेककुशली

जयपुराधीशो जयसिंहो जगाद-स्वामिन्! अयं हि शीखगुरुर्निरपराधीति अहं कथयामि. अस्य च सात्विकी निर्विकारा मुखमुद्रैव तथा कथयति. राजन्! सर्वेषु पापेषु राजद्रोहपापं महत्. तच्च गोपितमप्यनायासेन ज्ञायते. पापी मानवो राजासनस्य पुरतः कदापि निर्विकारया मुद्रया स्थातुं नार्हति. यदि नैवं तदा राजासनस्य माहात्म्यमपि किं? तथापि यदि स्वाम्येनं राजद्रोहिणं मन्यते तदाऽहं प्रतिभूर्भवामि. नैतावदेव किंतु एनं गृहीत्वाऽचिरादेव वंगदेशं गमिष्यामि. तत्र च वर्षपर्यन्तं स्थापितो यदि किमपि स्वामिविरुद्धं न चेष्टेत तदा स्वामिनाऽवश्यमयं निरपराधीति मत्वा स्वदेशं प्रेषणीय इति. इदं च बलाढ्यस्य जयसिंहस्य वचनमन्येऽपि केचन राजपुरुषाः क्षत्रियवंशसंभवा अन्वमोदन्त.

संशयी दिल्लीश्वरः स्पष्टं जयपुराधिपस्य तथाऽन्येषां च तदीयनिर्दुष्टत्वप्रतिपादकानि वाक्यानि समाकर्ण्य भीतो व्यचिन्तयत्- शीखधर्ममपि सनातनधर्मशाखात्वेन सर्वेऽपि जना मन्यन्ते. तत एव तस्य रक्षणाय रजपूतक्षत्रिया अपि प्रयतन्ते. अयं च जयपुराधिपो बलाढ्यः सर्वदैव स्वधर्मरक्षणमिषेण स्वकीयान् रक्षन् प्रतिबध्नाति मां मदीयधर्मप्रसारे. अधुनैवैनं यदि तिरस्करोमि तदा कोपाकुला इमे सर्वेऽपि सनातनधर्मानुयायिनः संमिलिता मदीयं राज्यं नाशयेयुः. तदधुना कालक्षेप एव करणीयः. परन्तु अहं नाग इवानुकूलं कालं प्रतिपालयन्स्थितोऽवश्यमेव तादृशे काले सर्वानप्येनान्नाशयिष्यामीति. विचिन्त्य चैवं स कपटी बहिःकिमप्यप्रदर्शयन्नुवाच-जयपुराधीश! यदि भवानित्थं मन्यते तदा नास्ति मम कापि क्षतिः. परन्तु

यदि विपरीतं किमप्यालक्ष्येत तदा तेऽभद्रं भविष्यतीति. अंगीकृते च तेन तस्मिन् वचसि चेतसि परं क्रुद्धोऽपि बहिः परं संतोषं प्रदर्शयन् राजसभां विसृज्य शयनालयमगाद्दिल्लीश्वरः. राजा जयसिंहोऽपि तेन महात्मना तेगबहादुरेण समं स्वनिवासं. जयपुराधीशश्च तस्य कपटशीलस्य दिल्लीश्वरस्य स्वभावं जानन् द्वितीयदिन एव ततो निर्गत्य वंगदेशं गन्तुं निरचिनोत्. महात्मा तेगबहादुरोऽपि अनेन प्रसंगेन तीर्थाटनं तथा शीखधर्मप्रसारं च सुकरं पश्यन् स्वशिष्यान् स्वदेशं प्रेषयित्वा कतिपयशिष्यैः समं तेन सह प्रातिष्ठत.

## ( उत्तरो विभागः )

१ दिल्लीपतिना सह संग्रामः.
२ कारागृहवासः.
३ स्वधर्मरक्षा.
४ शिरश्छेदः.

( १ )

जयपुराधिपेन जयसिंहेन समं वंगदेशं प्रति गन्तुं प्रस्थितः स महात्मा क्रमेण नाना परमपवित्राणि तीर्थस्थानानि पश्यन् सुखेन प्रावसत्. मार्गे च बलिष्ठस्य जयपुराधीशस्य जयसिंहस्य दर्शनार्थमागता वंगवासिनो दिल्लीश्वरस्य सामन्तास्तथाऽन्ये सभ्या जनाः तस्य महात्मनो गुरोस्तेगबहादुरस्य वैराग्यं तथा परमात्मभक्तिमवलोक्य विस्मिता भक्त्या तं सेवमानाः शीखधर्मानुयायिनोऽजायन्त. राज्ञस्तथेभ्याञ्जनान् शीखधर्मरतानवलोक्यान्ये

साधारणप्रज्ञा जना अपि तेन धर्मेण स्वकुशलसंपादनोत्सुकास्त-दनुगा अभवन्. एवं क्रमेण कक्षनिक्षिप्तहुताशन इव सर्वाञ्जनान् शीखधर्मः स्वानुगान् व्यधात्. स्थाने स्थाने कलहायमानांस्तीर्थोपाध्यायान् सान्त्वयित्वा चतुरो महात्मा तेगबहादुरः कर्तव्य-पालनोत्सुकानकरोत्. जगन्नाथप्रभृतिप्रधानक्षेत्रवासिनो मूर्तिभेदा-श्रयेण परस्परं द्विषतः सनातनधर्मानुयायिनो मूर्तिपूजायाः सत्यरहस्यनिवेदनेन निवृत्तद्वेषांश्चक्रे. तेन सर्वत्र तस्य महात्मन एव यशोदुन्दुभिरनदत्. प्रतिदिनं तद्दर्शनार्थमत्युत्कण्ठिता महं-मदीयाक्रमणैरुद्वेजिता असंख्या जनास्तन्निवासमागच्छन्. सोऽपि तान् प्रेममयैर्ज्ञानोपदेशैः सत्कृत्य कृतार्थानकरोत्. एवंरीत्या कृत्स्न-मपि वर्षं निमिषमिव व्यतीतमवलोक्य जयपुराधीशो जय-सिंहो दिल्लीश्वरहृदयं निर्मलं मन्यमानो महताऽऽदरेण तं महा-त्मानं गुरुं तेगबहादुरं स्वभवनं प्रेषयामास.

सर्वेऽपि शिष्यास्तं दिल्लीनगरात् प्रत्यागतं पुनर्जातमिव मन्यमाना महतोत्सवेन स्वागतीकृत्य तममृतसरनगरमानयन्. तत्र च निवसन् स महात्मा स्वधर्मप्रसाराय रात्रिंदिवं प्रायतत. तेन पल्लवितो महाद्रुम इव शीखधर्मः परमुल्ललास.

कपटी दिल्लीश्वरः सर्वतः प्रसृतैश्चारैर्ज्ञातवृत्तो नितरां क्रुद्धोऽ-भवत्. परन्तु सनातनधर्मानुयायिनां बलिष्ठानां राज्ञां विरोधम-श्रेयस्करं मन्यमानः किमपि न स विशेषमचेष्टत.

अथाचिरादेव रामरायस्तथा दुष्टा महंमदीया जनास्तमा-गत्यावदन्– स्वामिन्! महंमदीयस्य धर्मस्य प्रतिपालके त्वयि भारतवर्षं शासति सति क्षुद्रा इमे मूर्तिपूजका यथेच्छमस्मांस्तथाऽ-

स्मद्धर्मस्य स्थापकान्निंदन्ति. कथमिदं ते रोचते ? ये खलु त्वदीयपितामहप्रभृतयो दिल्लीश्वरा अभवंस्ते यद्यपि पितृतो महंमदीयाः परन्तु मातृतः क्षत्रियवंशजा एव. तेन ते स्वधर्माय नास्पृहयन्. अस्माकं पूर्वजन्मसुकृतैर्लब्धस्त्वं तु मातृतस्तथैव पितृतो महंमदीयोऽसि. तथैव त्वं स्वधर्माय तथा तत्प्रसाराय स्पृहयसेऽपि. परन्तु अस्मिन्नुत्तरार्यावर्ते शीखनामाऽन्य एव कश्चन धर्मः केनचिन्नानकनाम्ना क्षत्रियेण स्थापितः सम्प्रति प्रबलो भूत्वा महंमदीयधर्मं ग्रसितुमिच्छति. वस्तुतस्तु नायं कश्चन धर्मः किंत्वनेन धर्ममिषेण सर्वानेकत्रीकृत्य महंमदीयराज्यनाशार्थं धूर्तैः क्रियमाणः प्रयत्न एव. एतद्विज्ञायैव प्राचीनैस्त्वदीयैः पूर्वजैः समये समये तद्गुरवो दण्डिताः. गुरुर्हरगोविन्दस्तु केवलं दर्शनाय स्वीकृतं सात्विकं तेजोऽवधूय राजसीं वृत्तिमाश्रित्यायुध्यत. साम्प्रतमपि तदीयः पुत्रोऽयं तेगबहादुरो निभृतं वंगदेशे पर्यटन्ननेकान्नृपान् स्वशिष्यान्विधाय स्वमतानुवर्तिनो व्यधात्. त्वदीयो बलाढ्यो जयपुराधिपोऽपि अस्मिन् कर्मणि तस्य सहाय एव. यदि तु त्वादृशे बलाढ्ये महंमदीयधर्मस्य वृद्धौ कल्पवृक्षसमे दिल्लीश्वरे सत्यपि पामरा इमे भारतवासिनो महंमदीयान् बाधेरंस्तदा सत्वरमेवायं देवमान्यो महंमदीयधर्मो नामशेषः स्यात्. तत्समय एव सावधानो भूत्वाऽस्य स्वधर्मस्य शत्रून्निराकुरु. यद्युपेक्षातः स्वामी तेगबहादुरस्य शासने परमुदासीनो भवेत्तदा सर्वेऽपि त्वामसमर्थं वदेयुः. यदा च राजानमशक्तं मन्यन्ते प्रजाजनास्तदानीमेव संभूयोत्थिता अवश्यं राजानं पातयन्ति. राजशासनं यद्यपि न्यायमूलकं

तथापि तज्ज्ञानिनां कृते. अज्ञानिनस्तु केवलं पशुवद्यथेच्छाचारा दण्डेनैव शासनमर्हन्ति. जगति चाज्ञानिन एव बहवो, ज्ञानिनस्तु विरलाः. अतएव राज्ञा सर्वदा चण्डदण्डेन भाव्यमिति सर्वेऽपि राजनीतिविशारदा वदन्ति. युक्तमपीदं. न हि पशवो ज्ञानहीनाः केवलं पालकस्येच्छां विज्ञाय तदानुकूल्येन प्रवर्तन्त इति दृष्टचरं. तस्माद्यथा पशुपालको बलिष्ठं दण्डं गृहीत्वैव स्वकर्म करोति यशस्वी भवति च तथैव राजापि. तत् स्वस्य राज्यरक्षणेच्छया वा धर्मपालनेच्छया वा निभृतमत्यारूढं शीखधर्मापरपर्यायं शत्रुजालमवश्यं नाशय. सकलभारतवर्ष-पालकस्य ते न किमपि दुष्करं. ईश्वरस्त्वां नष्टशत्रुं विधाय चिरं राज्यभोगसुखिनं विदधात्विति.

वाचकाः! पश्यत सूचकजिव्हायाः सामर्थ्यं! येन केवल-मीश्वराराधनतत्परोऽविज्ञातराजद्रोहभावनागन्धो महात्मा तेग-बहादुरस्तथा तदीयः कृत्स्नोऽप्यनुयायिवर्गो राजद्रोहितां नीतः. इदमपूर्वं हि मानवबुद्धेः सामर्थ्यं यदन्ये प्राणिनः कल्पयितुमपि न शक्नुवन्ति तदिदं करोति. कार्यं च यदि समीचीनं तदा समीचीनमपि करोति, परन्तु असमीचीनकार्येऽपीदमप्रतिममेव. यथा खड्गः स्वपालकमपि हन्ति तथैवेयं बुद्धिरपि. सा च सज्जन-संगयुक्ता समीचीनान्येव कार्याणि करोति. कुजनसंगतिदूषिताऽ-तिपापानि कर्माणि करोति. तस्माच्छुभेच्छुना नरेण सर्वदा सज्जनसमागमे प्रयत्नः करणीय इति तत्त्वं. अस्तु.

रामरायप्रभृतिदुर्जनसंगतिदोषदूषितमानसः स्वयं पापी दिल्लीश्वरोऽवरंगजेबस्तस्य रामरायस्य तथा स्वकीयानां चेदं

वचो निशम्य कोपाकुलः सर्वानेव शीखधर्मानुयायिनः स्वद्रोहिणो मन्यमानस्तं तेगबहादुरं बलाद्बन्दीकृत्यानयनाय सेनां प्रेषयामास. महात्मा तेगबहादुरश्चेमां वार्तां चारमुखेन निशम्य चिन्तातुरः सत्वरं स्वानुयायिन आहूय कर्तव्यं विचारयामास. अवदच्च—वत्साः! अयं हि दिल्लीश्वरः साक्षाद्यम इव कृत्स्नमपीमं शीखधर्मं नाशयितुमिच्छति. यद्यपि शीखधर्मो राजकीये विषयेऽत्यन्तमुदास्ते, स च केवलं परमात्मसेवामुपदिशन् मानवान् कुकर्माचरणेभ्यो निवारयति, तदनुयायिनश्चोदरभरणार्थं नाना व्यवसायान्विदधतोऽपि न्यायेन वर्तन्ते, तथाप्ययं पितृघाती बन्धुघातमलिनमानसो दिल्लीश्वरस्तान् राजद्रोहिण एव मन्यते. महाभागाः! नीचनीतिरेवेदृशी. यत्स्वयंकृतान् दुराचारान् स सज्जनकृतान् मन्यते. शिष्याः! यदाऽत्यन्तं प्ररूढं पापं पापिनं सज्जनद्वेषाय प्रवर्तयति तदा तस्य नाशकालः समीपमागत इति सज्जना मन्यन्ते. यथाऽत्यारूढः स्फोटो नाशार्थमपथ्यमपेक्षते तथैव पापी स्वनाशसमर्थं पापं पूरयितुमिच्छुः सज्जनानेव बाधते. बान्धवाः! अस्मिन् समये सज्जना महादुःखमनुभवन्ति तथापि तत्र नान्या गतिः. सज्जनैस्तानि दुःखानि स्वसंतानस्य तथा स्वधर्मस्य वर्धकानीति मत्वा सोढव्यान्येव. यथाह्युष्णकाले प्रखररविकिरणसंतापं विना वर्षाकाले सर्वतः प्रसृता अचिरविलासिनीविलासरमणीया मेघा दुर्लभाः, यथा वा वर्षाकाले धारासंपातशीतवातदुःखं विना शरदि फलभारानम्रशाल्यंकुररमणीया मेदिनी कृषीवलस्य दुर्लभा तथैव दुर्जनदत्तानि दुःखानि अननुभूय स्वसंतानकल्याणकरणं सज्जनानाम-

शक्यमिति सर्वे भवन्तो विदांकुर्वन्तु. जगति ये खलु विचित्राः प्राणिनः परमात्मना विसृष्टास्तेष्वयं सज्जनो नामातिविचित्रः प्राणी. अन्ये ये केचन प्राणिनः सन्ति तेषु न्यूनाधिकभावेनापि स्वार्थबुद्धिर्वसति. परन्तु अस्मिन् सज्जनसमूहे लेशतोऽपि स्वार्थबुद्धिर्न वर्तते. एते प्राणिनः परान् सुखयितुं तेषां दुःखानि स्वयं भुंजते. रात्रिंदिवं परसुखमेवात्मसुखं मन्यमानाः प्रयतन्ते. वत्साः ! यथा पर्वतेषु निपातिता बलाढ्या अपि जलौघाः क्षणाच्चूर्णीभावमापद्यन्ते तथैव नित्यकल्पेषु एषु सज्जनेषु निपत्य बलाढ्या अपि दुर्जनाः क्षणान्नामशेषा भवन्ति. वत्साः ! रामायणकथां स्मरत. बलाढ्यो हि रावणः केवलं वनवासिना श्रीरामचन्द्रेण नामशेषः कृतः. किमत्र कारणं ? रामो हि सज्जनो रावणस्तु दुर्जन इत्येव. अयं च प्रमत्तो दिल्लीश्वरोऽवरंगजेबः स्वपितरं तथा बन्धुजनं हत्वा तल्लब्धानि पापानि स्वनाशायापूर्णानि मन्यमान इमं शीखधर्ममपि नाशयितुं प्रयतते. परन्तु बान्धवाः ! अहं सत्यं वदामि – श्रीनानकदेवस्थापिते गुरुहरगोविन्दप्रभृतिभिः प्रज्वालितेऽस्मिन् शीखधर्माग्नौ निपत्याचिरादेव स्वराज्येन सममयं दिल्लीश्वरो भस्मीभवेदिति. साम्प्रतं हि क्षुद्रः शलभः प्रदीपमिवेमं शीखधर्मं नाशयितुं चेष्टते, तथापि भावीतिहासकारास्तस्येदं चेष्टितं चापलत्वेनावश्यं व्यपदिशेयुः. वत्साः ! स्वकीयैरेव परिवर्धितेऽस्मिन्दिल्लीश्वरकोपाग्नौ यत्खलु शीखधर्मस्यातिप्रियं वस्तु तस्य निक्षेपेण शीघ्रमेव घृतस्पर्शेनेव प्रवृद्धः शीखधर्माभिमानाग्निस्तं दिल्लीश्वरं भस्मीकुर्यात्. तत्कथयत. किं खलु सर्वस्य शीखधर्मस्य तथा तदनुयायिनां च प्रियं? इति.

तदेतदतितेजस्वि महायोगिनस्तस्य तेगबहादुरस्य वचनमाकर्ण्य विस्मितस्तब्धः कर्तव्यपालनोत्सुकः सर्वोऽपि शीखधर्मानुयायिवर्गोऽभवत्. तदानीं समीपस्थ एव दशवर्षो बालो वीरशिरोमणिर्गुरुगोविन्दसिंहः प्रेम्णा पितुर्महात्मनस्तेगबहादुरस्य कण्ठमाश्लिष्य जगाद—तात ! सर्वस्याऽपि शीखधर्मानुयायिनः शिष्यवृन्दस्य न त्वत्तोऽन्यत्किमपि प्रियम्. सर्वस्याप्यस्य शिष्यसमूहस्य प्राणेभ्योऽपि अतिप्रिया यूयमेवेति.

अनवसिते तस्यास्मिन् भाषणे प्रसन्नो महात्मा तेगबहादुरः सस्मितमवदत्-वत्स ! सत्यं ते वचः. अयं हि शीखधर्मः स्ववृद्ध्यर्थं मामेव बलिं याचते. जगदीशस्येच्छापीदृश्येव दृश्यते. तदहमपि स्वदेहं शीखधर्माय दास्यामि. जीवतोऽपि मे इदमेव कार्यं. तच्चेन्मरणेन साध्यते तदा वरं. इदं च गुरुपदं न शिष्योपहारार्थं स्वीकृतं किंतु शीखधर्मवृद्ध्यै. तद्येन शीखधर्मवृद्धिः स्यात्तत्करणीयमेवेति.

विचिन्त्य चैवं तां यवनसेनामागच्छन्तीमाकर्ण्य तया सह योध्दुकामः सर्वानपि स्वानुयायिन एकत्रीकृत्योच्चैरवदत्—वत्साः ! अस्मदपेक्षया बलवती खलु यवनसेना. तथापि स्वकर्तव्यपालनाय वयं सर्वे समुद्यताः. जयपराजयौ हि परमात्मवशौ न मनुष्याधीनौ. मानवेन हि सर्वदा कर्तव्यपालनतत्परेण भवितव्यम्. अस्मत्पक्षे नास्ति बलाढ्या युद्धसामग्री तथापि सर्वापेक्षया श्रेष्ठं सत्यपक्षत्वं त्वस्ति. तत्रैव निर्भरं दत्वा वयं कर्तव्यपालनतत्परा भवाम इति.

अचिरादेव बलाढ्या यवनसेना युद्धाय स्थिता तैः शीख-

धर्मानुयायिभिः समाक्रान्ता तेषां शौर्यं वीक्ष्य विस्मयमापद्यत. वृद्धो महात्मा तेगबहादुरः सर्वेषामग्रेसरो भूत्वा प्रलयकाल-कृतान्तस्वरूपमधारयत्. स्वगुरोरिदमलौकिकं शौर्यमवलोक्याल्पा अपि तदीया अनुयायिनो यवनान् कांदिशीकान् व्यधुः.

( २ )

अथ चिरं युध्वा श्रान्तेषु शीखधर्मानुयायिषु सा यवन-सेनाऽन्यतो लब्धसाहाय्या पुनरपि महता कोपेन युध्यमाना क्रमेण तान् पराजेतुमारभत. तेऽपि यथाशक्ति प्रतिबध्नन्तोऽपि प्रलयकालजलधिवत् परिवर्धमानां तां यवनसेनां रोद्धुं नाशकन्. शीघ्रमेव यवनसेनापतिः कतिपयस्वसैनिकसमेतो महता प्रय-त्नेन तं महात्मानं गुरुं तेगबहादुरं बन्दिनमकरोत्. सोऽपि अधुना युद्धेन नास्ति किमपि प्रयोजनमिति मन्यमानस्तूष्णी-मतिष्ठत्.

ते च सर्वे सैनिकास्तं शृंखलानिगडितहस्तपादं विधाय गृहीत्वा दिल्लीनगरमागन्तुं यदा सन्नद्धा अभवंस्तदा सर्वेऽपि शीखधर्मानुयायिनस्तत्र मिलिता गुरोर्वृद्धस्य महात्मनस्तेगबहा-दुरस्येदृशीं दुर्दशामालोक्य दुःखाकुलाः स्वस्यासामर्थ्यं निन्दन्तः परमश्रूणि अमुंचन्. तान् स्वशिष्यसंघानश्रुमोचनतत्परानवलोक्य सन्तुष्टः श्रीतेगबहादुरोऽवदत्. वत्साः ! नास्ति दुःखाश्रुमोचनस्य किमपि कारणं. परमेश्वरो हि तं दिल्लीश्वरं सराज्यं नाशयितु-कामः पापपूर्तये मां बलिं याचते. अहं च वीततृष्णः स्वदेह-मानन्देन वितरामि. एनं लब्ध्वा कृतकृत्यं यावन्न मन्यते दिल्ली-श्वरस्तावदेव सोऽपि राज्येन समं नामशेषो भवेत्. परन्तु वत्साः !

युष्मान् दुर्बलान् वीक्ष्य संतप्यते मे चेतः. तदधुना मदीयां चिंतां विहाय कमप्येकं योग्यं नायकीकृत्य सबला भवत. येनेदृशाः क्षुद्रा दिल्लीश्वरसदृशा दुर्जना जना युष्मान् पीडयितुं समर्था न भवेयुरिति. तस्मिन्नेव समये प्रणिपतन्तं स्वपुत्रं गुरुगोविन्दं साशीर्वचनमाह—वत्स ! त्वं यदि मे सत्यः पुत्रः स्यात्तदा स्वर्गंगतस्य मे शरीरं यवना दूषयितुं यथा न प्रभवेयुस्तथा कुरु इति.

ततश्च तैर्मदान्धैर्यवनैः समं दिल्लीनगरमायातुं प्रारेभे. कतिपयदिवसैर्दिल्लीनगरमाजगाम च. महात्मा शीखधर्मगुरुस्तेगबहादुरो राजद्रोहारोपेण बन्दीकृत्य राजसैनिकैरानीत इति सर्वत्र प्रसृतां वार्तां निशम्य दिल्लीनगरवासिनस्तथान्येऽपि जनास्तं महाभागं द्रष्टुकामा नगराद्बहिरेवागच्छन्. तत्र च तं परमशान्तं प्रसन्नवदनकमलं योगिनमिव परमात्मकृपाशालिनं गुरुं तेगबहादुरं शृंखलाबद्धहस्तमालोक्य विस्मिता दुःखाकुलाः स्वस्वामिन इदं कुकृत्यं मन्वानाः परस्परमलपन्. बान्धवाः ! अयं च बन्दी महातपस्वीव दृश्यते. अस्य मुद्रामवलोक्यायं राजद्रोही कदाऽपि भवितुं नार्हति. एष पितृघाती नः स्वामी सनातनधर्मानुयायिनः परं द्विषन् येन केनापि निमित्तेन दीनानपि बन्दीकृत्य शास्ति. न जाने को वाऽनेन कर्मणा तस्य लाभः ? स हि कदाचिन्मन्येत 'ईदृशेन कर्मणा सनातनधर्मो नामशेषो भवेदिति.' तदिदमत्युपहासास्पदं. ईदृशैः सज्जनपीडनैः सनातनधर्मो नामशेषोऽभूत्वा परिवर्धितपापसंचयः स एव नामशेषः स्यादिति.

एवं प्रजाजनानां दुःखमयान् संलापानाकर्ण्य सन्तुष्टचेताः

स तेगबहादुरो दिल्लीनगराद्बहिरेवातिष्ठत्.

स च सेनापतिः स्वामिने तदानयनं निवेदयितुकामः सैनिकानप्रमादेन तस्य पालनाय समादिश्य स्वयं स्वामिनं द्रष्टुं ययौ. यथावसरमवकाशं लब्ध्वा तस्मै सर्वं शीखधर्मानुयायिनां पराजयवृत्तं तथा महात्मनस्तेगबहादुरस्य बन्दीकरणमानयनं च न्यवेदयत्. स तु शठः परं संतोषं प्रदर्शयन्नुवाच—सेनापते ! अस्य कार्यस्यानुरूपमेव पारितोषिकं त्वमचिराल्लप्स्यसे. परन्तु तं दुष्टं तेगबहादुरं कारागृहे स्थापयित्वा तमप्रमादेन परिपालय. अयं हि सनातनधर्मानुयायिनां परं प्रियः. अतस्तं मोचयितुं सर्वेऽपि सनातनधर्मानुयायिनस्तथा शीखधर्मानुयायिनः परां काष्ठां करिष्यन्ति. तत्सावधानेन वर्तस्व. यस्मिन्दिनेऽहं तमुचितेन दण्डेन योजयिष्यामि, तस्मिन्दिने त्वामपि पारितोषिकदानेनानुग्रहिष्यामि. तद्गच्छ. त्वं स्वयं तत्र स्थित्वा तं रक्ष. यद्यन्यथा भवेत्तदाऽवश्यमेव तेऽभद्रं भविष्यतीति. सोऽपि स्वामिस्वभावं जानन्नमस्कृत्य प्रत्यगच्छत्.

अनयच्च तं शान्तं महात्मानं तेगबहादुरं सदैव नग्नशस्त्रमंडितकराग्रैर्भीषणैर्बलिभिः सैनिकैः सर्वतः प्रतिपालितं, अतिदुर्भेद्यकपाटयुगलमण्डितेन लोहकीलकखचितेन प्रवेशद्वारेण मण्डितं, गगनस्पर्शिभित्तिपरिवेष्टितं, अनेकपक्षिगणविसृष्टपुरीषपूतिगंधि, अतिविरलप्रकाशवर्धमानतिमिरपटलभीषणं, धूलिपटलसमाच्छादितभूतलं, अतिविस्तृतं, एकदेशस्थापितमूत्रपुरीषोत्सर्गभाण्डं, जीर्णकंबलप्रावरणं , कदन्नजलपरिपूर्णभाण्डद्वयालंकृतं, स्थाण्ववलग्नलोहशृंखलाभयंकरं, कशादिताडनसाधनपरिपूर्णं, यमलोकस्थं यातनागृहमिवातिविरलमानवदर्शनं कारागृहं.

तत्र च कृतप्रवेशो निरीक्षकनिगडितपादयुगलो महात्मा तेगबहादुरः शान्तमनाः सर्वमेतत्तस्य भगवतः सर्वशक्तेः परमेश्वरस्याचिन्त्यं लीलाजातमिति मन्यमानः परमानन्देन भूमितल एव स्वशरीरमक्षिपत्. संजातप्रवासपरिश्रमः सत्वरमेव निद्रामलभत. परितः सावधानेन स्थिताः सैनिकाः कमप्येकं निरीक्षणकर्मणि नियोजयित्वा स्वयमपि निद्रावशा अभवन्.

वाचकाः ! पश्यत दैवस्य दुर्विलसितं. यो हि महात्मा तेगबहादुरः परममाननीयं शीखधर्मगुरुपीठमासीनोऽतिनम्रैः श्रद्धालुभिर्भक्तैः संसेव्यमानः सर्वान्धर्मतत्त्वान्युपदिशन् सर्वेषां नमस्कारान् प्रतिगृण्हन् सुखेन कालं यापयामास, स एव विपरीतदैवोऽद्य भयंकरे कारागृहे धूलिधूसरे भूतले पतितो निद्राति. इदं विषयाणां क्षणभंगुरत्वं तथा सुखस्याशुविनाशित्वमवलोक्य संजातनिर्वेदा महात्मान आत्मज्ञानमेव शरणीकुर्वन्ति. सज्जनाः! इह जगतीतले महाप्रतापा अलौकिकशौर्यसम्पन्नाः पृथ्वीपतयोऽपि नैकान्तेन सुखभाजोऽभवन्. नापि पृथ्वीतलकुबेरायमाणा धनाढ्या अपि वैश्याः. किंतु विषयसुखलवनिस्पृहाः सदाऽऽत्मानन्दमग्नाः सारासारविवेकचतुरास्तत्त्वविद एवैकान्तेन सुखिनोऽभवन्. एतादृश एव महात्मा तेगबहादुर आसीत्तेनैव कारणेन स तस्मिन् भयंकरेऽपि कारागृहे स्वगृह इव सुखेन सुष्वाप. अस्तु.

अथ द्वितीयदिने दिल्लीश्वरोऽवरंगजेबस्तं कारागाराधिपमाहूय जगाद—अयं तेगबहादुरो न हन्तव्यः किंतु महंमदीयधर्मानुगः कर्तव्य इत्यास्ति मे मनीषा. तत्त्वं तथा यतस्व यथा

स शरीरयातनाः सोढुमशक्नुवानः स्वयं महंमदीयधर्मं स्वीकर्तुमुद्यतः स्यात्. अस्मिन् कर्मणि सफलीभूते संतुष्टोऽहं प्रभूतेन पारितोषिकेण त्वां सुखिनं करिष्यामि इति.

स च स्वामिसेवातत्परः पारितोषिकलाभार्थमुत्सुकस्तद्दिनमारभ्य तं दीनं वृद्धं महात्मानं तेगबहादुरं नानाविधैरुपायैः परमक्लिश्नात्. कदाचित्तं प्रबलशीतपीड्यमानं प्रावरणादानेन, कदाचिद्द्वित्रदिनपर्यन्तं भोजनादानेन, कदाचित्कशाताडनैः, कदाचित्क्रूरैरपमानकारकैः शब्दैः, कदाचिच्छीखधर्मनिन्दया, कदाचिच्छिरश्छेदभयेन पीडयन्तं तं कारागृहाधिपं स महात्मा तेगबहादुरोऽवोचत्. त्वं स्वस्वामिनं मद्वचनाद्वद—दिल्लीश्वर! अयं तेगबहादुरो न रामरायो यो हि शरीरक्लेशभयाद्वा विषयलाभलोभाद्वा स्वधर्मं निन्देत्. प्राणापहारभीत्या त्वां शरणमागच्छेत्. अहं हि परममान्यस्य गुरोरर्जुनसिंहस्य नप्ता गुरुहरगोविन्दसिंहस्य पुत्रः परममान्यश्रीगुरुराजनानकदेवस्थापितशीखधर्मगुरुर्नाम भूत्वा कथं क्षुद्रक्षणभंगुरविषयलोभेन मदीयं धर्मं त्यक्त्वा परकीयं धर्मं स्वीकुर्यां? ते हि स्वधर्मं त्यजन्ति ये धर्मरहस्यं तथा तज्जन्यं सुखं चानुभवितुं न प्रभवन्ति. ये तु तज्ज्ञानसुखेन तृप्तास्ते कदापि विषयसुखलवाय न स्पृहयन्ति. तस्मादमृतपानतृप्तस्य महाभागस्य श्वभिः स्पृहणीये वमने प्रवर्तनामिव तेऽयं प्रयत्नो निष्फलो भवेदिति सत्यं जानीहि. तद्वृथाऽऽयासेन किं? शीघ्रमेव मां शूलावतंसीकृत्य कृतकृत्यो भवेति.

एवं विज्ञप्तोऽपि कारागृहाधिपतिद्वारा स दुष्टोऽवरंगजेबो न विरराम, प्रत्युत वर्धमानक्रोधोऽधिकं तं पीडयितुं तमाज्ञापयत्.

( ३ )

यद्यपि स्वधर्मगुरुं कारागृहे स्थापितमवलोक्य सर्वेऽपि शीखधर्मानुयायिनः श्रेष्ठा अत्यन्तं संतप्ता अपि दिल्लीश्वरसामर्थ्यं प्रबलमिति ज्ञात्वा तूष्णीमातिष्ठन्. तथापि ते निभृतं तं मोचयितुं प्रायतन्त. ते च दिल्लीश्वरस्वभावं सम्यग्जानन्तः कूटानुपायानपि प्रायुंजत. प्रतिदिनं च निरीक्षणनियुक्ताः सैनिकास्तन्मोचनतत्पराणां शिष्याणां तथाविधानुपायांस्तमकथयन्. दिल्लीश्वरोऽपि तेगबहादुरस्य मुक्तिमनर्थकरीं मन्यमानः सत्वरमेव किमपि कर्तुकामो द्वितीयदिने सभाविधानार्थं मुख्यममात्यमादिदेश. सोऽपि सर्वत्र दिल्लीनगरे घोषकमुखेन तां वार्तां घोषयामास.

अथ भगवति सकललोकपालके भास्करे महता दुःखेनेवोदयाचलमारूढे सति सर्वेऽपि दिल्लीनगरवासिनस्तस्य महात्मनस्तेगबहादुरस्य धैर्यं तथा स्वधर्मरतिमवलोकयितुकामा नियतं स्थलमागच्छन्. केचन स्थल एवोपाविशन्. केचन स्पष्टावलोकनेच्छया वृक्षानारुरुहुः. सर्वेऽपि राजपुरुषा व्यवस्थार्थं दिल्लीश्वरेणाज्ञप्ताः सैनिकैः समं तत्रोपस्थिता जनानशासुः. सामन्ता अपि दिल्लीश्वरकृपालोभाकुला अनिच्छन्तोऽपि तं विधिं द्रष्टुं बलादागत्य स्वस्वासनानि अलंचक्रुः.

नियते समये नग्नखड्गधारिभिर्बलाढ्यैर्महंमदीयधर्मानुयायिभिरतिप्रवृद्धश्मश्रुसंघातभीषणदर्शनैः शरीररक्षकैरसंख्यैः परिवृतः, अतितीक्ष्णनयनाभ्यां जनहृदयगतं स्वानुरागं परीक्षमाण इव प्रतिरोमपरिपूर्णेतरधर्मद्वेषेण ज्वलन्निव सकलराजैश्वर्यालंकारसमलंकृतशरीरः, रत्नभूषितो नाग इव भयंकरः, यम

इवान्यधर्मानुयायिनां, कपटमय इव, मूर्तिमान् पापसंचय इव भारतवासिनां, सकलैरनुचरैस्तथा राजपुरुषैः सामन्तैः प्रजाजनैर्वंद्यमानोऽपि वांच्छितविनाशः स पितृद्रोही दिल्लीश्वरोऽवरंगजेबस्तत्स्थलमाजगाम.

सुवर्णयष्टिधरैर्निवेदितागमनः सभासत्काराननुभूय सर्वानुद्दिश्य जगाद—सामन्ताः ! अयं खलु शीखधर्मगुरुस्तेगबहादुरः स्वधर्मप्रसारमिषेणास्माकं धर्मं तथा राज्यं द्वेष्टि. तन्नाशाय प्रयतते च. युष्मासु च परस्परद्वेषेण तथा परस्परं युध्यमानेषु परां दुःखस्य काष्ठामारूढेषु च सत्सु परमात्मना युष्मत्कल्याणार्थमिदं महंमदीयानां राज्यमत्र स्थापितं. यतः प्रभृति अत्रेदं राज्यं स्थापितं तत आरभ्य युष्मासु परस्परकलहो नामशेषोऽभूत्तेन भवन्तः सुखेन जीवन्ति. नात्र पूर्ववद्यः कोऽपि वलाढ्यो दीनान् पीडयितुं शक्नोति. मयि राजनि सति शक्रोऽपि दीनान् पीडयितुं न शक्नोति तदा केऽपर इत्यपि वः सर्वेषां प्रत्यक्षमेव. सामन्ताः ! वयं च प्रजास्वास्थ्यमपेक्षमाणाः प्रजादुःखानि दूरीकर्तुमहर्निशं प्रयतामहे. यथा च वयं पश्यामस्तथा सर्वमपीदं दुःखं भेदभावनामूलकमेव. चौरो हि न स्वद्रव्यं लुण्ठति किंतु परस्य. किमत्र कारणं ? ऋते भेदभावनायाः. चौरो हि तं धनिकमत्यन्तं स्वभिन्नं मन्वानस्तस्य द्रव्यमपहर्तुं प्रयतते. तस्य शासनं च राजपुरुषैः क्रियत एव. यथैव मनुष्यः शरीराद्युपाधिभिरन्यान् भिन्नान् मनुते तथैव धर्मेणापि. अस्मिन् भारतवर्षे भिन्ना भिन्ना धर्मपथाः परं सन्ति. तेन निसर्गत एवाज्ञानां तदनुयायिनां च परस्परद्वेषमूलकाः कलहा भवन्ति. तेनाऽपि दीना महादुःखं

लभन्ते तस्यास्य धर्मभेदस्य नाशाय सततं प्रयतमानोऽहं यथाशक्ति बलात्कारेणान्यान् धर्मपथान्नाशयामि. तेन मां क्रूरं जना वदन्ति. परन्तु यथा बालकानां कल्याणे माता कारणं तथैव प्रजानां कल्याणे राजा. यथाऽज्ञा बालका रोगार्ता अपथ्येच्छवः प्रतिबन्धिकां मातरं निन्दन्ति तथैवाज्ञा जना मामपि. सुज्ञास्तु स्तुवन्त्येव. तदनिष्टेऽस्मिन् धर्मभेदमार्गे तस्य चालकानहं प्रतिदिनं क्रूरैर्दण्डैर्नाशयाम्येव. परन्तु प्रतिदिनं नूतना आविर्भवन्तस्ते कठिनं कुर्वन्ति मदीयं मार्गं. यथा ह्येकोऽपि पुरीषपरमाणुर्भक्ष्यसमूहमध्ये पतितः सर्वं तं दूषयति तथा नूतन एकोऽपि अन्यधर्माभिमानी समुद्भूतः कृतं कृत्स्नं कार्यं नाशयति. तस्मादित ऊर्ध्वं नीचजनानामीदृशे कुकर्माणि प्रवृत्तिं निरोद्धुमहं तान् प्राणदण्डेन योजयामि. येन भीता अन्ये जनास्तथा वर्तितुमसमर्था भवेयुः. अधुना च मया बन्दीकृत्य समानीतस्तेगबहादुरोऽपीदृश एव. अयं तु न केवलं राजधर्मं निन्दति स्वधर्मं चान्यमेव प्रसारयति किंतु अस्माकं परममान्यं न्यायमूलकं सकललोकसुखदायि राज्यमपि नाशयितुं यतते. तदयं यदि परममान्यं राजधर्ममनुसरेत्तदा मोचनीयः परन्तु यदि तं नांगीकुर्यात्तदा प्राणदण्डेनायं योजनीयो भवेदिति.

तदिदं तस्य कपटमतेर्भाषणं निशम्य क्रोधान्धा अपि अशक्ताः सर्वेऽपि सनातनधर्मानुयायिनस्तूष्णीमातिष्ठन्. अवरंगजेबस्तान् मूकान् वीक्ष्य सन्तुष्टः क्रूरकर्मा तं महात्मानं तेगबहादुरं तत्रानेतुं सेनापतिमादिदेश. अचिरादेव लोहशृंखलानिगडितहस्तपादं वनकेसरिणामिव निर्भीकं, प्रसन्नवदनकमलं, विस्तीर्णोरस्कं,

महायोगिनमिव कठिनशरीरावयवं तेन सेनापतिनाऽनुसृतं, सर्वतःस्थितसशस्त्रसैनिकगणं तं तेगबहादुरं समागतमवलोक्य खिन्नाः सर्वेऽपि जना नयनेभ्यः परमश्रूण्यमुंचन्. महात्मा गुरुस्तेगबहादुरस्तु तान् सर्वानपि सनातनधर्मानुयायिनस्तथा शीखधर्मानुयायिनो दुःखाकुलानवेक्ष्य स्वमरणं श्रेयस्करं मन्यमानः परमतुष्यत्. शीघ्रमेव स क्रूरकर्मा दिल्लीश्वर उच्चैस्तं तेगबहादुरमवदत्– रे रे नास्तिकशिरोमणे! त्वं हि राजधर्मद्रोही भूत्वा महंमदीयराज्यमपि नाशयितुमिच्छसीति मया सम्यग्विज्ञातं. तत्स्वधर्माभिमानं त्यक्त्वा राजधर्ममनुसरन्नात्मानं रक्ष. किंवाऽऽत्मानं बलिं कृत्वा स्वधर्माभिमानं वह. यदि त्वं राजधर्ममनुसरिष्यसि तदाऽहं तुभ्यं महतीं सम्पदमपि दास्यामि. तत्कतरत्ते रोचत इति सत्वरं कथयेति.

अनवसित एव तदीयवचनप्रवाहे, सर्वेषु प्रेक्षकेषु प्रत्युत्तरश्रवणाय समुत्कण्ठितेषु सत्सु शोकम्लानमुखेषु शीखधर्मानुयायिषु स्वदृष्टिं निक्षिप्य शान्तः स क्रमेणावोचत्– क्षुद्र! दिल्लीश्वर! त्वामहं राजानं न वदामि किंतु बलिष्ठं चौरं. यो हि स्वप्रजाजनानां सर्वस्वं हरति स यदि राजा स्यात्तदा चौरः कः? वयं हि भारतवासिनो यथा धर्मप्रियास्तथा न द्रव्यप्रियाः. द्रव्यं चोपात्तं भुक्तं च सर्वमिहैव तिष्ठेत्. सर्वदा सहायश्च नो धर्म एव. तं प्राणप्रियं धर्ममपहरताऽस्माकं सर्वस्वं हृतं न वा भवता! पापमते! त्वया हि राज्यलोभेन स्वजनकस्तथा निरपराधा बन्धवो घातिताः. त्वादृशस्य नराधमस्य दर्शनेनात्मानमहं पापिनं मन्ये. यदि त्वं सत्यमेव स्वधर्मं प्रमाणीकुरुषे तदा

कथय त्वदीये धर्मे स्वपिता पुत्रेण हननीय इत्याज्ञापितमास्ति न वेति. लोभाकुलचित्तवृत्तेरिदं ते लोकव्यामोहनं धर्मप्रसारप्रावरणं. पापिन्! आत्मवत्सर्वमपि जनं लोभाकुलं मन्वानो विषयलाभं दर्शयित्वा तेषां सर्वस्वं हरसि. परन्त्वयं तेगबहादुरः कदापि त्वदभिलषितं न पूरयिष्यतीति सत्यं जानीहि. त्वं हि यं राजधर्मं मन्यसे स एव राजधर्मः कस्मात्! तथाहि त्वं स्वपितरं हत्वा राजाऽभवः, यथा वा त्वदीयः परमपूर्वजः सनातनधर्मानुयायिनः क्षत्रियराजान् हत्वा स्वयं राजाभूत्तथैवान्यः कश्चन बलाढ्योऽन्यधर्मीयस्त्वां हत्वा दिल्लीश्वरो भवेच्चेत्तदीयो धर्मोऽपि राजधर्मो भवेत्! तस्माद्धर्मे राजसंबन्धो नास्त्येव. धर्मस्तु केवलं पारलौकिकफलदायी मानवस्य श्रद्धया कल्पितः. तत्राग्रहस्य नास्ति कारणं. सज्जनाश्च नानाविधान् धर्मपथान् केनचिदंशेन भिन्नानपि सर्वानपीश्वरसेवावादिनो नीत्युपदेशपरानवलोक्य संतुष्टा न विवदन्ते. नापि कलहायन्ते. परन्तु त्वादृशा नरराक्षसाः परान् सर्वथा परतंत्रान्विधातुकामा अनेन धर्मग्रहमिषेण जनान् पीडयन्ति. दिल्लीश्वर! त्वादृशा नरराक्षसाः प्रकृत्यैव जनपीडनायेह समवतीर्णाः प्रजाजनानां पापैरीदृशमधिकारं लभन्ते. परन्तु अस्मिन्नधिकारे समाप्त एव क्षणात्त्वादृशा अधमाधमाः स्वपापफलानि भोक्तुं नरकलोकं यान्ति. राज्यलोभसमाकुलस्त्वं सर्वमपि जनं राजद्रोहिणमेव मन्यसे, परन्तु यावत्कालमिमेऽन्ये जना मां राजद्रोहिणं न मन्यन्ते तावदहं न बिभेमि. यथाहि ते धर्मस्तुभ्यं रोचते तथव मम धर्मो मह्यं. तत्र कस्तेऽधिकारो मां बलात्कारेण स्वधर्मत्याजने!

यथाहि क्षुद्रा जना रामरायप्रभृतयस्त्वत्तो जीवस्यापायमाशंकमाना बिभ्यति तथाऽयं तेगबहादुरो बिभीयादिति मनसि मा कुरु, पापिन् ! त्वं बलाधिक्येन यथा प्रजाजनानां शरीरस्य स्वाम्यभूस्तथा तदीयमनसामप्यभूः किं ? नराधम ! मां निरपराधिनं पीडयन्तं त्वां बलाढ्यं प्रतिकर्तुमक्षमाः केवलमश्रूणि मुंचन्त एते सभ्याः किं कथयन्ति ? तन्मया श्रद्धया स्वीकृतस्य परममान्यस्य स्वधर्मस्य त्यागः स्वप्नेऽपि त्वया न शंकनीयः. यदि च मां त्वं मोक्ष्यासि तदोत्तरार्यावर्तं गत्वा पुनरपि स्वधर्ममुपदेक्ष्यामि. यथा च त्वं बलात्कारेण स्वधर्मं प्रसारयितुमिच्छसि तथा न वयं. वयं तु केवलं समुपदिशन्तः स्वधर्मतत्त्वानि जनानां चेतांस्यनुकूलानि कुर्मः. अयमेव धर्मप्रसारस्य सत्यो मार्गः. परन्तु त्वादृशाय गर्वातिरेकतिरस्कृतसदसद्विवेकबुद्धये कथमयं पन्था रोचेत. त्वं यथा दण्डेन दुर्बलान्वशीकरोषि तथैव धर्मेऽपि. पापमते ? ईदृशरीत्या धर्मस्य प्रसारो न सत्यस्तत्प्रसारो यतोऽनया रीत्या क्षुद्रा एव जना मदीयधर्ममनुसरन्ति न सन्मान्याः. क्षुद्राश्च द्रव्यलोभाकुलास्त्वां हीनदशमवलोक्यान्यमेव धर्ममनुसरेयुः. एवं चेदानीं विहितस्त्वदीयः प्रयत्नो विफल एव. व्यर्थं त्वया दीनपीडनालब्धः पातकराशिरवशिष्ट एव. अहं तु यदाऽत्रागतस्तदैव जीवनाशाममुञ्चमेव. तन्मुञ्च वा जहि वा. अयं तेगबहादुरः स्वप्नेऽपि स्वधर्मं न मुंचति तदा कैव कथा जागृताविति.

तस्य महात्मनस्तेगबहादुरस्येदं तेजस्वि प्रत्युत्तरमाकर्ण्य कोपाकुलोऽवरंगजेबः सावेशमाह—जडमते ! यदि स्वधर्मं न

त्यक्ष्यसि तदाऽस्मिन् क्षणे तव शिरश्छेदं करिष्यामि. यथा हि तव धर्मो तुभ्यं रोचते तस्य प्रसाराय भवान् रात्रिंदिवं प्रयतते, ततोऽप्यहं स्वधर्मप्रसाराय प्रयते. त्वां येन केनाप्युपायेन मदीयधर्मानुयायिनं करिष्यामि तदा सर्वेऽपि त्वदनुयायिनोऽनायासेन महंमदीया भविष्यन्ति. यदि च भवान्न मदीयं धर्मं स्वीकरिष्यति तदा त्वां हत्वा मदीयधर्ममार्गं सुगमं करिष्यामि. तत्पुनः पृच्छामि महंमदीयधर्मानुयायी भूत्वाऽऽत्मानं रक्षेति.

अनवसित एव तदीयेऽस्मिन् वचने क्रोधातिरेकरक्ततरनयनाभ्यामग्निस्फुलिंगान् वर्षन्निव प्रकंपमानशरीरयष्टिर्दीर्घश्वासचंचलोष्ठः क्रुद्धः सिंह इव गर्जन् प्रत्युवाच महात्मा तेगबहादुरः— दुरात्मन् ! इदानीं त्वदीयहस्ते खडगो वर्तते तेन त्वमुन्मत्त इव दीनानपि हंसि. यदा च भगवानन्यहस्ते खड्गं निक्षिपेत्तदा सोऽपि त्वां मामिव क्रौर्येण हन्यात्. तदानीमेव त्वं मदीयं वचः स्मरेः ! अयं च तेगबहादुरः श्रीगुरुराजस्य नानकदेवस्यामृतमयीं वाणीं निपीयामरः संवृत्तः. तद्यथेच्छसि तथा कुरु. तव पापराशिं पूरयितुं मम शरीरमहं बलिं करोमीति.

( ४ )

उक्त्वा चेत्थं निर्भीकवदनकमलं धैर्येणावस्थितं सिंहमिव पंजरबद्धं तं साटोपं स्थितं समवलोक्य क्रुद्धो नष्टसारासारविवेको महामान्यैः शीखधर्मानुयायिभिस्तथा सनातनधर्मानुचरैः शान्त्यर्थं तथा तस्य मोचनार्थं विज्ञप्यमानोऽपि अशान्तकोपः परितः स्थितान् सैनिकान् खड्गेन शिरश्छेदार्थमादिदेश. उच्चैर्जगर्ज च-सार्वभौमो दिल्लीश्वरः स्वशत्रुं तथा धर्मशत्रुं कथं नामशेषं

करोतीति सर्वे जना जानन्तु. भाविन इतिहासकारा अपि मम धर्मप्रीतिं निरतिशयां वदन्तु इति.

सैनिकाश्च स्वस्वामिन इममादेशमाकर्ण्य स्वस्वखड्गानुद्धृत्य तस्य महात्मनस्तेगबहादुरस्य कण्ठदेशे निपातयितुमुद्यता अभवन्. तांश्चोन्नमितखड्गान् प्रहारपरानवलोक्य स्वीयजीविते वितृष्णः स महात्मा तेगबहादुरः शृंखलानिगडितमपि बाहुयुगलं यथाशक्त्युन्नमयित्वोच्चैरवदत्– स्वर्गवासिन् ! गुरुराज ! नानकदेव ! आसीन्मे महतीच्छा शीखधर्मप्रसारायाऽऽमरणं प्रयत्नः करणीय इति परन्तु दैवेन सा विफलीकृता. अथवा मन्ये सफलीकृतेति. यतो मदीयशरीरपातरुधिरसिक्तोऽयं सन्मान्यः शीखधर्मवृक्षोऽचिरादेव प्रफुल्लः सर्वानपि जनान् सुखीकुर्यात्. सनातनधर्मानुयायिनः ! सर्वे यूयमस्य नीचस्य वर्तनं प्रत्यक्षं पश्यथ ! एष च मानवराक्षसो मामिव युष्मानपि नामशेषान् कुर्यात्. तद्यथाशक्ति सर्वेऽपि यूयं मिलित्वाऽस्य नाशाय प्रयतध्वम्. ईश्वरः सर्वानपि युष्मान्नस्य नरराक्षसस्य दुःखाच्छीघ्रमेव मोचयतु इति.

अनवसितेष्वेव तदीयभाषणाक्षरेषु स क्रूरमतिर्दिल्लीश्वरः स्वसैनिकांस्तस्य शिरश्छेदायाज्ञापयत्. तेऽपि तस्मिन्नेव क्षणे सर्वतस्तीक्ष्णखड्गप्रहारैः परिपक्वं बिल्वफलमिव तदीयं शिरस्तस्य देहाद्भिन्नमकार्षुः. निपपात च रुण्डहीनस्तस्य महात्मनो धैर्यखनेः सकललोकवंद्यस्य शीखधर्मगुरोस्तेगबहादुरस्य देहस्तस्मिन् भूतले.

तदानीं तत्र मिलिताः सर्वेऽपि प्रजाजनास्तथा सामन्ताश्च तदीयमिदं क्रौर्यं तथा तस्य महात्मनस्तेगबहादुरस्य धैर्यमवलोक्य

विस्मिता न किमपि अजानन्. केवलं मनसैव—हा हन्त! अनेन निर्दयेन दिल्लीश्वरेण सज्जनोऽयं शीखगुरुर्महात्मा तेगबहादुरो वृथा निहतः. न जानीमहे पापैरीदृशैः कुकर्मभिः कोऽवास्य लाभः! अस्मानप्येष कदाचिन्निहन्यात्. तत्सावधानेन स्थातव्यमिति मेनिरे.

स्वगुरुं महात्मानं स्वर्गगतमवलोक्य शोकसागराधस्तलं प्रविष्टाः शीखधर्मानुयायिनो नागरिकाः स्वगुरुशवं संस्कर्तुमिच्छन्तो विनयेन तस्य पुरतः समागताः प्रेतमयाचन्. स तु पापी कोपेन दग्धहृदयः सहसा जगाद—एष शीखधर्मो न कश्चन धर्मः किंतु केषांचिन्मूढानां वा राजद्रोहिणां वा संभ्रमः. तद्यथाऽन्ये जना स्वसंकल्पेनान्यान् धर्मपथान्न विरचयन्त्विति हेतोरेव मया तेगबहादुरः प्राणदण्डेन दण्डितः. तथापि स शिरश्छेदसमयेऽपि सधैर्यमवर्तत. तेनाहं परं क्रुद्धोऽस्मि. तस्मादहं कदाप्यस्य नीचस्य शवं न युष्मभ्यं दास्यामि. किंच—सनातनधर्मानुयायिनः प्रेतं दहन्ति. महंमदीयधर्मानुसारिणस्तु शवं भूमिसात्कुर्वन्ति. यूयं च न सनातनधर्मानुयायिनस्तथा महंमदीया अपि न. तस्माद्युष्माकं गुरोः प्रेतं तथैव संस्थाप्य कृमिभिर्भक्षणीयम्. तथैवाहं कर्तुं निश्चयमपि अकार्षम्. तद्गच्छत स्वगृहं. अलभ्यं खलु भवतां गुरोः कलेवरं इति. ते च दीना असमर्था राजकोपभिया किमपि कर्तुं न प्राभवन्.

तदानीमेव स मत्तो दिल्लीश्वरस्तमेव सेनापतिमाहूय जगाद—सेनापते! अनेनाहं परमपमानितस्तदस्य जडस्य मन्दमतेः कलेवरमितो नीत्वा तस्मिन्नेव कारागृहे स्थापय. अप्रमादेन परिपालय. यदि कश्चनैनमपहरेत्तदा त्वामपि नामशेषं

करिष्यामि. यदा चेदं शरीरं कृमिभिर्भक्षितं गृध्रैः खादितं नामशेषं स्यात्तदा मां कथय. तदानीमेव त्वां प्रभूतपारितोषिकलाभेन सुखिनं करिष्यामीति. सोऽपि पारितोषिकलाभमोहितस्तस्य महात्मनः कलेवरं सैनिकैर्वाहयित्वा कारागारमनयत्. दिल्लीश्वरोऽपि शीघ्रमेव सामन्तान्विसृज्य स्वनिवासमगात्. सैनिकैस्तस्य महात्मनस्तेगबहादुरस्य शरीरे भूमित उत्थापित एव सति सर्वे प्रजाजनास्तदीयमरणशोकविव्हलास्तस्य नामोद्घोषयन्तस्तदीयं शवं पुष्पक्षेपैरपूजयन्, प्रशशंसुश्च तदीयं धैर्यं.

वाचकाः ! पश्यत राज्यमदस्य सामर्थ्यं. यश्च दिल्लीश्वरः स्वधर्मप्रसाराय महात्मानं गुरुं तेगबहादुरमवधीत्तथा च तस्य शरीरमपि न तच्छिष्येभ्योऽदात् स क्रूरोऽवरंगजेबोऽपि कालवशोऽभूत्. परन्तु तस्य दीनस्य छलः सज्जनानां चेतांसि अद्यापि पीडयति. इमं क्रूरं वृत्तान्तमनुवाच्य वाचकाः संतप्तास्तं पापिनं दिल्लीश्वरं निन्दन्ति. तेगबहादुरं स्तुवन्ति. किमत्र कारणं ? ऋते दीनपीडाविधानात्तथा निरतिशयधर्मप्रीतिदर्शनात्. अयं च संपन्मदः सज्जनानपि दुष्टान् करोति तदा किमुत निसर्गदुष्टान्. अयं च पापी दिल्लीश्वरः स्वपितरमपि घातयामास. तदा क्वैव दीनस्य महात्मनस्तेगबहादुरस्य कथा ! अस्तु. सर्वथा दिल्लीश्वरेण महदनुचितं कृतं. परन्तु सज्जनाः ! महात्मनस्तेगबहादुरस्य धैर्यं तथा स्वधर्मनिष्ठा निरतिशयेत्यत्र न कस्यापि संशयः. क्व च दिल्लीपतिः, क्व च महात्मा तेगबहादुरः, परन्तु क्षुद्रदेहमोहेन दिल्लीश्वरविज्ञप्तिस्तेन न स्वीकृतेति महाभिमानास्पदं. एतादृशैर्गुरुवरैरधिष्ठितोऽयं धर्मः प्रवर्धेतेत्यत्र किमाश्चर्यं. धन्यः स महात्मा तेगबहादुरः.

# वीरश्रेष्ठो गुरुगोविंदसिंहः

## ( पूर्वभागः )



( १ )

यदा च महात्मा तेगबहादुरो दिल्लीनगरमागन्तुमारभत तदानीमेव स्वजीवनं समाप्तकल्पमेव मन्यमानः स स्वपुत्रं गुरुगोविन्दसिंहं शीखधर्मगुरुपदेऽभ्यषिंचत्. अयं च वीरश्रेष्ठो गुरुगोविन्दसिंहः केवलं तदानीं दशवर्ष आसीत्. महात्मा तेगबहादुरो जयपुराधीशेन समं यदा वंगदेशमगच्छत्तदा सुप्रसिद्धे पाटलीपुत्रेऽयं प्रादुर्बभूव. स च तत्रैव मातुलगृहे वर्तमानो यदा पुनरपि दिल्लीश्वरेण समं शीखधर्मानुयायिनां युद्धप्रसंगचिन्हमलक्ष्यत तदानीं पित्रा समाहूतोऽमृतसरनगरमागच्छत्. अस्तु.

स्वपितरं दिल्लीपतिना बन्दीकृतं समवलोक्य संतप्तो गुरुगोविन्दसिंहस्तेन समं कांश्चिच्छिष्यान् प्रेषयित्वा स्वयमपि तत्पश्चादागत्य दिल्लीनगरान्नातिदूरे निभृतमतिष्ठत्. यदा च महा-

त्मनस्तेगबहादुरस्य शिरश्छेदं वीक्ष्य शोकाकुलैः शिष्यैस्तदीय-शरीरदानार्थं विज्ञप्तोऽपि क्रूरोऽवरंजेबस्तेभ्यः शरीरं न ददौ, तदा नयनजलक्लिन्नवदनकमलास्ते प्रत्यागत्य कथमपि सर्वं वृत्तं तस्मै न्यवेदयन्. तच्च हृदयविदारि श्रोतुमप्यशक्यं वृत्तमाकर्ण्य क्रोधरक्ताक्षः सावेशमाह—कथं यूयं तस्य शिष्या नाम भूत्वा तदीयं प्रेतमप्यानेतुमसमर्थाः! अहमपि पुत्रो भूत्वा तदीयं शरीर-मपि संस्कर्तुमसमर्थः! धिक् मे पुत्रत्वं! धिक् युष्माकं शिष्यत्वं! यो हि मादृशः पुत्रः स्वपितरं तथा स्वगुरुं युष्मादृशाः शिष्या मृतमपि संस्कर्तुं न प्रभवन्ति तैर्वृथाभूभारहरणाय जीवनं समु-त्स्रष्टव्यमेव. पापी दिल्लीश्वरो मम पितरं स्वर्गं गमयित्वा पुन-स्तस्य शरीरमपि संस्करणार्थं न विसृजति! जीवन्तं मदीयं पितरं द्विषन्मृतमपि तं द्वेष्टि. यदि मृतस्य शरीरमप्यानेतुं न वयं प्रभवामस्तदा किमिति जीवामः. गुरुराजनानकदेवस्थापितेऽस्मिन् शीखधर्मे कथमियती दुर्बलता! यत्तदनुयायिषु मध्य एकोऽपि स्वप्राणव्ययेन शीखधर्मरक्षणार्थं स्वर्गं गतस्य स्वगुरोः प्रेतमप्या-हर्तुं न समर्थो भवति. पिता मे युष्माकं गुरुर्महात्मा तेगबहा-दुरः सदैव युष्मानपि स्वपुत्रानेवामन्यत. तद्यदि यूयं सर्वेऽपि तस्य कलेवरस्यानयने सत्यमेवासमर्थास्तदा गुरुपदग्रहणाय समर्था न वा? अहं च स्वप्राणव्ययेन मम पितुः शरीरमानीय संस्करिष्यामि. किंवा तेन समं स्वर्गं गमिष्यामि. पितृशरीर-मसंस्कृत्य मम जीवनमसंभवीति.

अनवसित एव तदीये वचनप्रवाहे कश्चन वृद्धः शीखधर्मा-नुयायी समं यूना स्वपुत्रेणोत्थाय साञ्जलिबन्धं प्रार्थयामास—

विजयतां गुरुदेवः. अहं च महात्मनोऽस्मद्गुरोः शरीरमानेष्यामि. यदि न समर्थः स्यां तदा प्राणांस्त्यक्ष्यामि, परन्तु रिक्तहस्तो न मलिनमुखः प्रत्यागमिष्यामि. तदनुज्ञादानेनानुगृण्हातु मां स्वामीति. निशम्य च तस्येमां विज्ञप्तिं सन्तुष्टः स वीरश्रेष्ठो गुरुगोविन्दसिंहोऽवदत्—धन्योऽसि वृद्धश्रेष्ठ! धन्योऽसि, गच्छ गुरुसेवाविधानार्थं. तत्र यदि प्राणांस्त्यक्ष्यसि तदा स्वर्गं गमिष्यसि परन्तु मामप्यनुपदमागतं द्रक्ष्यसि. अहं च त्वदागमनं प्रतिपालयन्नत्रैव स्थास्यामीति.

तदानीमेव पवित्रं गुरुचरणारविन्दं नमस्कृत्य महता वेगेन दिल्लीनगरमभिलक्ष्याधावताम् तौ पितापुत्रौ. मार्गे च तस्य सुखननाम्नः श्रेष्ठिनः शकटवाही सेवकः समुपलब्धः. स च तौ तस्य श्रेष्ठिनो गृहमनयत्. तौ च सत्कृत्य सुखनश्रेष्ठी जगाद. इदानीं युवाभ्यामत्र स्थातव्यं. मध्यरात्रे च वयं सर्वेऽपि गुरोः शवलाभार्थं प्रयतिष्यामह इति.

अथ भगवति सहस्ररश्मौ तयोर्महाभागयोः गुरुसेवौत्कण्ठ्यमालोक्येव जवेन स्वभवनं प्रयाते सति, सर्वत्र च गाढान्धकारे प्रसरति सति स गुरुसेवोत्सुकः सुखनश्रेष्ठी ताभ्यां सह तस्य कारागृहस्य समीपं समागच्छत्. तत्र च स्वशकटं निधाय तं तस्य वृद्धस्य पुत्रं युवानमाह—बन्धो! त्वया निभृतमेतत्प्राकारवलयं समुल्लंघ्येदं कपाटमुद्घाटनीयं. एते च निरीक्षका निश्चिन्ता निद्राधीनाः किमपि न चेष्टन्ते. तत्त्वरस्व. यावदिमे सुप्तास्तावदेवेदं कार्यं समापनीयमिति. अंगीकृत्य तदीयं नियोगं स बलिष्ठो युवा गुरुचरणारविन्दं स्मृत्वा लील-

यैव तत्प्राकारवलयमारुह्यान्तरवतीर्णः कपाटमुद्घाटयामास. तेन च प्रविष्टः स वृद्धः शीखधर्मानुयायी तेन स्वपुत्रेण समं तद्भवनान्तरं प्रविश्य दीपभाण्डं प्राज्वालयत्. तदानीं तत्र निद्रितस्येव तस्य महागुरोस्तेगबहादुरस्य कलेवरं वीक्ष्य संजातशोकातिरेकः साक्रोशमरोदीद्विललाप च–गुरो! किमियं ते दशा. नाथ! अस्मान् कर्तव्यविमुखान्नपुंसकानवलोक्य खिन्नो न किमप्यालपसि! महात्मन्! शीखधर्मरक्षणार्थं स्वप्राणानुत्सृजता त्वया सर्वेऽपि वयं लज्जापिताः. अधुना चायं शीखधर्मवन्हिः प्रज्वालोऽचिरादेवेदं महंमदीयराज्यं भस्मीकरिष्यति. चाण्डाल! नृपापसद! शान्तस्वभावं परमात्मसेवकं महात्मानमिमं हत्वा त्वया कियत् पापमर्जितमिति चित्रगुप्तोऽपि गणयितुं न शक्नोति. इति.

तं चाविरतं प्रलपन्तं क्रमेण वर्धमानस्वरं स्वपितरमवलोक्य कार्यविघ्नभिया संजातशोकावेगोऽपि महता प्रयत्नेन तं नियम्य युवा तमुवाच– तात! यदि त्वमित्थं विलपन्नेव स्थास्यसि तदा निरीक्षका लब्धबोधा अवश्यमेव कार्यं विनाशयेयुः. तत्क्षणमात्रं शोकमवधार्य प्रथमत इदं कलेवरं गृहीत्वेतो निर्विघ्नं निर्गतौ गुरुपुत्राय गुरुगोविन्दसिंहाय समर्प्य पश्चाद्यथेच्छं विलापिष्यावः. तच्छोकं विधूय प्रथमत इदं कलेवरं बहिर्नेतुं मम सहायो भवेति. स तु वृद्धः पुत्रवचनमंगीकृत्य यावदुत्तिष्ठते तावत्तस्य मनसि एका शंका समुदभवत्. उवाच च स्वपुत्रं– वत्स! आवामिदं गुरोः कलेवरं गृहीत्वेतो निर्गतावपि शनैः शनैर्वृषभशकटे निधायैव स्वगुरोः समीपं नेष्यावः.

तदानीं च प्रातःकालेऽपि प्रबुद्धा निरीक्षका अत्र कलेवरं नास्तीति पश्यन्तो महता वेगेन सर्वत्र परिशोधयन्तो ध्रुवमेवावामनुधाविष्यन्ति. आवां च शनैः शनैर्गच्छन्ताववश्यं ते लप्स्यन्ते. तथा च कृतमपि महासाहसं वृथा भूत्वाऽऽवामपीमां दशां प्राप्स्यावहे. तदत्र कस्यचिदावयोरन्यतरस्य कलेवरं स्थापयित्वैवेदं गुरुकलेवरं नेयं. अहं च समाप्तकल्पजीवनः स्वकलेवरमत्र स्थापयितुमिच्छामि. तदात्महत्यापातकपरिमार्जनार्थं मां निहत्य मदीयं कलेवरमत्र निधायेदं शरीरं गृहीत्वा स्वगुरोः समीपं व्रज. अहमपि गुरुसेवार्थं परित्यक्तप्राणः स्वर्गं यास्यामीति.

स तु युवा वृद्धस्य स्वजनकस्येमां शंकां सत्यां मन्वानो जगाद. तात! इदं भयंकरं कर्माहं कथं कुर्यां! पवित्रात्तेऽस्मादुदराज्जनित्वा यदीदमेव क्रियते तदा जन्मैव मे वृथा. अतिदुःखानि विपह्य पिता पुत्रं पुष्णाति तत्किं स्वस्य शिरश्छेदाय? वार्धक्ये यदि पुत्रो वृद्धं स्वपितरं नोपास्ते तदा तस्य पुत्रत्वं धिक्. तन्मामेव हत्वाऽत्र स्थापयाऽथवाऽहमेवात्मानं हत्वाऽत्र कलेवरमुत्सृजामि. येन त्वमपि निर्दुष्टः सुखेन यास्यसीति.

तदिदं तस्य भाषणं शून्यमनाः स वृद्धो यावच्छृणोति तावत् कश्चन निरीक्षको लब्धसंज्ञः संजातशंकः सर्वानपि स्वसहचरानबोधयत्. परन्तु ईशकृपया पुनरपि ते निद्राधीना अभवन्. वृद्धस्तु तान्निद्राधीनानवलोक्याधुना कालहरणमश्रेयस्करं मन्यमानः सत्वरमुत्थाय—चरमे वयसि वर्तमानस्य मे नास्ति तावत्यावश्यकताऽस्मिञ्जगतीतले स्थातुं. त्वद्धस्तेन निवापाञ्जलिं लब्ध्वाऽहं कृतकृत्यः स्यां. तद्यदि गुरुसेवायामयं देहो

निपतति तदा तत्र प्रतिबंधं कृत्वा पापी मा भव. सुखेन जीव. प्राणात्ययेऽपि गुरुसेवां मा मुंच. मातरं परिपालय. गुरुगोविन्द-सिंहं वद–अवश्यमेव पितृवधप्रायश्चितं दिल्लीश्वराय देहीति. उक्त्वा चेत्थं निष्कोषीकृत्य स्वखड्गं तेन गुरोस्तेगबहादुरस्य चरणकमले निहितमूर्धाऽऽत्मानं जवेन कण्ठे प्राहरत्. अपतच्च तद्रुण्डं निःस्रवद्रुधिरपंकिलं गुरुचरणकमले भक्त्या निहितं सद्यः प्रफुल्लं जपाकुसुममिव शोभमानं. स्वपितरं च स्वर्गगतमवलोक्य शून्यधीर्विमूढचेता निश्चेतनः स्थाणुरिव स युवा तत्रातिष्ठत्.

बहिःस्थितः सुखनश्रेष्ठी किमिति वेलायतेऽयं वृद्ध इति चिन्तामग्नः किमप्यनिष्टशंकाकुलस्तत्रागतः शवद्वयमपश्यत्. विस्मितो यावत्तं युवानं पृच्छति तावत् स धीरः पुत्रः कार्य-गौरवं ज्ञात्वा कथमपि स्वपितृशोकावेगमवधार्य नूतनवस्त्रेण पितरं वेष्टयित्वा गुरुशवमादाय ततो निर्गतस्तेन श्रेष्ठिना समं बहिराजगाम. तत्र गुरुकलेवरं शकटे स्थापयित्वा चरमं पितृ-चरणदर्शनसुखमनुभवितुं तत्रागतः प्रार्थयामास-तात! धन्योऽसि. सनाथीकृतोऽयं त्वया मर्त्यलोकः. त्वादृशा नरपुंगवा अति-विरलाः. केवलं यथाकथंचिद् दुष्टस्यास्योदरस्य पूरणार्थं नाना-विधानि पापकर्माणि कुर्वन्त एव बहवः. अनेकजन्मसंपादितैः सुकृतैस्तव पुत्रत्वमहमलभे. यद्यपि तव शरीरं संस्कर्तुमहं न प्रभविष्यामि तथापि गुरुसेवायां स्वदेहं त्यक्तवतस्ते किमेभि-र्बाह्यैःसंस्कारैः? तात! शुभैराशीर्वादैर्मामपि गुरुसेवातत्परमेव कुरु इति. अन्ते च परमपवित्रे तदीये पादारविन्दे मूर्धानं निधायाविरतं निपतद्भिरश्रुजलैस्तदाभिषिच्य स्वभालपटलं तद्धू-

त्यंकितं विधाय ततो निरगात्.

ततश्च महता वेगेन धावमानः स युवा तेन सुखनश्रेष्ठिना सह दिल्लीनगराद्बहिर्दूरं ययौ. प्रातःकाले प्रबुद्धा अपि ते निरीक्षका दूरत एव तत्प्रेतमवलोक्य निश्चिन्ता न किंचिदप्यशंकन्त.

वाचकाः! अपूर्वमिदं गुरुभक्तेरुदाहरणं. समरे च ते ते वीरश्रेष्ठा अभिमुखमागच्छतोऽरिवीरान् हत्वा तैर्हताश्च स्वर्गं गच्छन्तीति शतशो दृष्टं श्रुतं च. परन्तु स्वर्गं गतस्य गुरोः कलेवर-मानेतुकामः स्वशरीरं तत्रात्यजदिति विचित्रम्. धन्यः स धर्मः, धन्या सा भारतजननी, धन्यः स कालः, यत्रैतादृशो नरवीरा अजायन्त. इदानीं तु शुष्कस्य काष्ठस्य कृते कलहायमानान् गुरुशिष्यानवलोक्य वयं लज्जामहे. अस्तु.

मार्गे च स सुखनसाहश्रेष्ठी तस्य यूनो मुखात् सविस्तरं तद्वृत्तमाकर्ण्य परं विस्मितस्तमभिननन्द. तुष्टाव च तत्पितरम्.

( २ )

अथ संध्यासमये दूरत एव समागच्छन्तं तं शकटं तथा तं युवानं तथा सुखनश्रेष्ठिनमवलोक्य संजातानन्दः स गुरु-गोविन्दः पुरतः सत्कारार्थमागतस्तावाश्लेषेण संमानयामास. यदा च गुरुगोविन्दसिंहस्तस्य वृद्धस्य शिष्यस्यानागमनकारणं जिज्ञासमानः सुखनश्रेष्ठिनो मुखात्सर्वं तदीयप्राणत्यागवृत्तमशृणो-त्तदा प्रफुल्लकमलसनाभिभ्यां नयनाभ्यामश्रुजलं यथेच्छं विसृज-न्नुवाच—धन्यः सः! एतादृशानि वीररत्नानि जनयत्ययं शीखधर्म इत्येव वयं तस्मै स्पृहयामः. बलाढ्यमपि दिल्लीश्वरं द्विष्मः. एतादृ-शानुयायिसाहाय्येन प्रोत्साहिता वयं दिल्लीश्वरं सराज्यं नाशयितु-

मिच्छामः. तदुत्तिष्ठत. अल्पमवशिष्टो भगवान् सहस्ररश्मिः. विरचयत च चितां. तत्र युष्माकं गुरुं स्वर्गं गतं महात्मानं तेगबहादुरं निधाय दिल्लीश्वरनाशाय प्रतिज्ञां कुर्म इति.

इमां गुर्वाज्ञां प्रमाणीकृत्य सर्वेऽपि तत्रस्थाः शीखधर्मानुयायिनोऽरण्यं गत्वा चन्दनकाष्ठभारानाजह्रुः. विरचयामासुश्च महतीं चितां. अथ तत्र गुरोः कलेवरं स्थापयितुमिच्छुषु प्रयतमानेषु सर्वेषु तेषु तान्निवार्य गुरुगोविन्दः सरोषमाह—गुरुकलेवरस्पर्शे न युष्माकमधिकारो नापि मम किंतु यैः स्वप्राणहानिमगणयित्वा कारागृहादिदमानीतं तेषामेव. स वृद्धो यद्यप्यत्र नास्ति तथापि तदीयमधिकारं तदीयः पुत्र एव लभतामिति. अनेन गुरुगोविन्दसिंहस्य भाषणेन ते सर्वे लज्जिता अधोवदना दुःखाकुला दूरतोऽवातिष्ठन्त. ततश्च तेन चितामारोपिते तस्मिन् कलेवरेऽग्निं निधातुमिच्छन् परमपवित्रं स्वपितुः शीखधर्मगुरोर्महात्मनस्तेगबहादुरस्य चरणारविन्दं स्पृशन् रोषकषायितलोचनो गुरुगोविन्दसिंह उच्चैरुवाच—बांधवाः ! एष मे पिता युष्माकं धर्मगुरुरस्मान् सर्वानपि विहाय परलोकमगात्. अयं च नेतरगुरुवन्निसर्गेण स्वदेहममुंचात्किंतु मत्तेन दिल्लीश्वरेण च्छिन्नमूर्धा. तद्यदि अहमस्य तेगबहादुरस्य सत्यमेवौरसः पुत्रः स्यां तदा गुरुघातकं तथा स्वधर्मद्रोहिणं पापं दिल्लीश्वरं सराज्यमवश्यं घातयिष्यामि. यदि नैवं स्यात्तदाऽनन्तेषु जन्मसु नरकदुःखभाजं मामीश्वरः करोतु. अत्र च प्रमाणमयं सकललोककर्मसाक्षी सूर्यनारायण एव. यदैव मे पिता दिल्लीश्वरसेनापतिना बन्दीकृतस्तदैव स्वस्य दौर्बल्यं नाशयितुं मया प्रतिज्ञा कृता. तदितः

प्रभृति कृत्स्नमपि ममायुरस्याः प्रतिज्ञायाः पूरणार्थमेव यापयिष्यामि. अत्रापि प्रमाणं शीखधर्मोद्यस्थापकानां गुरुराजश्रीनानकदेवानां चरणा एवेति.

तामिमां स्वगुरोर्घोरां प्रतिज्ञामाकर्ण्य संतुष्टाः सर्वेऽपि शीखधर्मानुयायिनस्तां प्रतिज्ञां पुनरुच्चार्यामरणं प्रतिज्ञापालने साहाय्यदानार्थं प्रत्यजानन्. ततश्च संतुष्टेन तेन गुरुगोविन्देन तस्यां चितायां निक्षिप्तोऽग्निरप्रतिमदुःसहतेगबहादुरतेजसा दत्तसाहाय्य इव परिवर्धितोऽचिरादेव तं देहं स्वरूपं प्रापयामास. सर्वे च ते शीखधर्मानुयायिनः समं गुरुगोविन्देन तथा तेन यूनाऽमृतसरनगरमागत्य प्रतिज्ञापूरणार्थं सामग्रीसंपादने व्यग्रा अभवन्.

वाचकाः! यदा खलु पापी दिल्लीश्वरो महात्मनस्तस्य तेगबहादुरस्य शिरश्छेदमकरोत्तदा सर्वेऽपि शीखधर्मानुयायिनो निभृतं तन्नाशाय यतमाना बहिःस्तब्धा इवाभवन्. यथा हि पुटपाकावस्थितोऽग्निः कृत्स्नं गृहं धक्ष्यन्दुःसहतेजा नष्ट इव प्रथममाभाति तथा शीखधर्मानुयायिनां कोपोऽपि नष्ट इवाभासत. तमिमं शमं शीखधर्मानुयायिनां पराभवमूलकं मन्यमाना मदोन्मत्ता यवना दिल्लीश्वरं स्वसहायं मन्यमाना यथेच्छमवर्तन्त. यः कोऽपि क्षुद्रो यवनः स्वप्रातिवेश्मिनं धनाढ्यं कुलीनमपि सनातनधर्मानुयायिनं परमपमानयति स्म. राज्ञा नियुक्ता न्यायाधीशा अपि यवनाः स्वसजातीयरक्षणलोभाकुलास्तं घोरापराधिनमपि यवनं नादण्डयन्. तेन प्रतिदिनं यवना प्रबला भूत्वा यथेच्छं सनातनधर्मानुयायिनां धनं तथा भार्या

अप्यहरन्. आर्या अपि राजानं तथा न्यायाधीशांस्तथा राजसेवकान् पक्षपातिनः समवलोक्य संतप्ता निभृतं यवनराज्यनाशाय प्रयतमानाः प्रकटं तथा वर्तितुमशक्ता भगवन्तमेव स्वरक्षणाय प्रार्थयन्त. सज्जनाः! प्रथमत एवाज्ञानिनो महंमदीया दीनानार्यवंशजान् पीडयितुमैच्छन् परन्तु इतःपरं दुर्दान्तानां तेषामाचाराः परं दुःसहा अभवन्. उत्तरार्यावर्ते यवनाः कियद्दुराचारा अजायन्तेति दर्शयितुं केवलं द्वित्रान् वृत्तान्तानहमत्र लिखामि.

उत्तरार्यावर्ते ‘मांझा’ नाम्नि प्रदेशे ‘पुला’—नामकः कश्चन ग्रामो वर्तते. तत्र तारुसिंहो नाम सदाचारसंपन्नः कश्चन क्षत्रियो न्यवसत्. स तु यद्यपि न गर्भत एव श्रीमांस्तथापि नित्ययोगक्षेमार्थं समर्थया कृष्या सुखी आसीत्. तस्य विधवा माता तथैका भगिनी केवलमासीदसम्पन्नविवाहतया न पत्नी. स स्वीकृतशीखधर्मो प्रतिदिनं ग्रंथश्रेष्ठाभ्यासी यथाशक्ति परोपकारविधानेन दीनानां साहाय्यमकरोत्. तेन दीना जनाः सर्वत्र तदीयां कीर्तिमवदन्.एकदा दुराचारिभिस्तद्ग्रामवासिभिः कतिपयैर्महंमदीयैर्दीनस्य कस्यचित् सनातनधर्मानुयायिनो गृहं लुण्ठितं. स च तदीयस्वजनैः समं परं ताडितः. स तु दीनः प्रतिकर्तुमक्षमो लुण्ठितसर्वस्वः संजातदयेन तेन तारुसिंहेन स्वगृहं नीत्वा स्थापितो भोजितश्च. सोऽप्यनन्यगतिकस्तत्र स्थित्वा परेद्युरन्यत्र ययौ.

ते तु बलमदान्धा लुण्ठका यवनाः स्वशत्रुं तारुसिंहगृहे स्थितं समीक्ष्य कोपाकुलाः सर्वानपि ग्रामवासिनः स्वबान्ध-

वान् ' अयं तारुसिंहो राजद्रोही सर्वदा दिल्लीश्वरसजातीयानस्मान् बाधत इति निवेदयन्तस्तं बन्दीकर्तुं साहाय्यदानाय प्रार्थयन्त. तेऽपि तत्सदृशाः सद्य एव मिलित्वा तं तारुसिंहं बन्दिनमकार्षुः. अनयंश्च दिल्लीपतिना नियुक्तस्य लाहोरनगरन्यायाधीशस्य समीपं. अवदंश्च—न्यायाध्यक्ष ! अयं हि तारुसिंहः शीखधर्मानुयायी रात्रिंदिवं दिल्लीश्वरस्य तथा तदनुयायिनामस्माकमनिष्टं चिन्तयति. कृत्स्नस्य शीखधर्मस्य राजद्रोहित्वं तद्गुरोः शिरश्छेदनेन प्रभुर्दिल्लीश्वरः प्रख्यापितवान्. अयं तु न केवलमेतावन्तमेवापराधं करोति किंतु अस्मद्विरोधिनोऽपि स्वभवनमानीय स्थापयति. तानस्मद्विरोधार्थमुत्साहयति. तदयं सहसा हन्तव्य एवेति.

न्यायाधीशोऽपि महंमदीयः स्वजातिविरोधिनं तं तारुसिंहं शीखधर्मानुयायिनमवलोक्य क्रुद्धः सहसा तं हन्तुमादिदेश. वधस्थानं नीयमानः स तारुसिंहः स्वसजातीयान् रुदतः समवलोक्य खिन्नो जगाद— बान्धवाः ! एष न न्यायः किंतु न्यायाभासः. यत्र हि मम शब्दमपि न श्रुत्वा दण्डः क्रियते तत्र प्रतिवचनप्रयासेनापि किं ? इमे महंमदीया मां राजद्रोहिणं वदन्ति परन्तु न ते जानन्ति स्वयमेव राजद्रोहमाचरन्तीति. एते च विजयमदोन्मत्ता अस्मान् मानवानपि अगणयन्तः पशुवद्यथेच्छं पीडयन्ति परन्तु यदा समयपरिवर्तनं स्यात्तदा कः खलु एषां महंमदीयानां त्राता ? भगवान्हि अगणितपापाचारसंपादितान् पापभोगान् भोक्तुमवश्यमेवैतान् क्रूरैर्दण्डैर्योजयेत्. अस्मिन् समये तु दीना हताशा वयं कथमपि वर्तमाना अनु-

कूलकालप्रतीक्षां कुर्मः. बान्धवाः ! किं वृथारोदनेन. स्वसंरक्षणार्थं तथा मदान्धानामेषां शासनाय च परमात्मानमेव प्रार्थयत. स एव सर्वशक्तिमान् संजातदयो युष्मान् संरक्षेत्. इति.

अचिरादेव क्रकचयंत्रमारोपितः क्रमेण पिष्टीकृतचरणाद्यवयवसमूहो राजद्रोहमाचरिष्यसीति तैः पृष्टः स ' ईदृशदुःखपर्वतनिपातं विना दिल्लीश्वरस्य पापपूर्तिर्न भवेत् ' इत्येवोत्तरयामास. ततश्च कतिपयैः क्षणैः स स्वर्गं जगाम. वाचकाः ! निःसंशयमिदं क्रौर्यं ? अनुपमं च राज्यमदस्योदाहरणं. राज्यमदेन न केवलं राजान एव मत्ता भवन्ति किंतु तत्सजातीया अपि. अस्तु. अपरमपि यथा—उत्तरार्यावर्ते सियालकोटनामा महान् ग्रामो वर्तते. तत्र भागमल्लनामा कश्चन क्षत्रियो वसति स्म. स तु राजसेवकः प्रतिदिनं राज्यकार्याणि कुर्वन् कथमपि स्वकुटुंबपोषणमकरोत्. तस्य हकीकतरायो नाम कश्चन एक एव पुत्र आसीत्. स च यदा सप्तवर्षोऽभवत्तदा देशकालावेक्ष्य यवनलिपिं पठितुं कस्यचिद्यवनपण्डितस्य समीपे पिता तं प्रैषयत्.

एकदा तस्मिन् यवनाध्यापके केनापि कारणेन बहिर्गते सति सर्वेऽपि सहाध्यायिनो नानाविधा लीला अकुर्वन्. तत्र केचनार्यवंशजा आसन् केचन महंमदीयाः. तत्र यदा हकीकतरायः क्रीडायां पितृपितामहपरिपूजितां देवीं पूजयितुमारभत तदाऽन्ये महंमदीयाः सहाध्यायिनः परं देवीमनिन्दन्. शमस्वभावोऽपि स हकीकतरायः स्वदेवीनिन्दां यवनमुखेभ्यो निशम्य क्रुद्धस्तान् प्रथमत उपदिदेश. परन्तु यदा ते भूयोऽपि अनिन्दन्

तदा तेन संजातकोपो बालत्वेन स्वकर्मणः फलमनभिसंधाय तानताडयत्. तेषु चाग्रेसरा गुरुपुत्री. तेन तामपि हकीकतरायोऽताडयत्.

अथ स यवनाध्यापको यदा स्वगृहमाजगाम तदा तस्मै सर्वे महंमदीयबालकास्तथा तदीया कन्याऽपि सर्वं वृत्तमकथयत्. स तु कोपाविष्टो हकीकतरायमाहूय सर्वमपृच्छत्. सोऽपि सर्वं सत्यमेव वृत्तमवदत्. तेन रुष्टः स यवनाध्यापको निर्दयं ताडयित्वा तं पुनरपि दण्डायितुं न्यायाधीशस्य समीपमनयत्. न्यायाधीशोऽपि क्रूरो महंमदीयस्तमविचार्य कारागारेऽस्थापयत्.

बालो हकीकतरायो न्यायाधीशेन कारागृहं प्रेषित इति सर्वजनमुखसंचारिणीं वार्तां निशम्य तदीयौ वृद्धौ मातापितरौ परं दुःखाकुलौ यवनहस्तगतस्य सनातनधर्मानुयायिनो दुर्दशां जानन्तौ सत्वरं न्यायालयमागत्य स्वपुत्रमोचनाय विज्ञापयामासतुः परन्तु यशस्विनौ नाभूताम्.

अथ मुख्यो न्यायाधीशस्तस्य हकीकतरायस्यापराधं विचारयितुमिच्छुर्ग्रामस्थान् सभ्यान् महंमदीयानाव्हयत्. तेऽपि धर्ममदान्धा राज्यमदभुग्नाः कृत्रिमं तेन यवनाध्यापकेन निवेदितं वृत्तमाकर्ण्य प्रत्यवदन्—यतोऽयं निनिन्द महंमदीयधर्मं तस्मादनेन महंमदीयो धर्मः स्वीकरणीयः किंवा प्राणत्यागो वा विधेय इति. सर्वे च तत्र मिलिताः सभ्या इममपूर्वं न्यायप्रकारमवलोक्य दुःखाकुला अपि कठोरशासनभिया किमपि प्रतिवक्तुमसमर्थास्तूष्णीमतिष्ठन्. हकीकतरायस्य मातापितरौ तु परमशोचेताम्. ततश्चान्तिमनिर्णयार्थं स हकीकतरायः प्रान्ताधि-

पस्य सन्निधिमानीतः. प्रान्ताधिपोऽपि तथैव वदन् जगाद. वत्स! हकीकतराय! त्वयाऽपराधो महान् कृतः, परन्तु दयाशीलोऽहं त्वां वदामि- यदि त्वं महंमदीयधर्मं स्वीकरिष्यसि तदा स्वप्राणानपि लब्ध्वा पुनरधिकारं तथाऽगणितां सम्पदमपि लप्स्यस इति.

बालो हकीकतरायस्तु तस्य प्रान्ताधिपस्येदं भाषणं निशम्य सस्मितमुखः प्रतिजगाद. यवनाधिप! त्वमात्मौपम्येन सर्वानपि विषयलोलुपान् गणयसि! परन्तु नाहं तथा. अहं तु प्राणादपि धर्मं श्रेष्ठं मन्ये. अवश्यंगामिनां प्राणानां रक्षणेच्छया चिरस्थायिनं धर्मं को वा सचेता उत्सृजेत्? यथा युष्माकं धर्मो मया निन्दितस्तथा तैरपि अस्मद्धर्मो निन्दित एव. तत्कुतः खलु ममैव दण्डः. यदि गुरुकन्या सनातनधर्मानुसारिणी भवेत्तदाऽहमपि महंमदीयधर्ममनुसरेयम्. यूयं तु राज्यमदान्धाः स्वधर्ममपि राजधर्मत्वेन व्यपदिशथ. परन्तु नेदं न्याय्यं. सर्वे धर्मास्तत्तज्जनसमूहसंरक्षणेच्छया परमात्मनैव विरचिताः. तत्र श्रेष्ठकनिष्ठत्वयोः कः प्रसंगः! मूढाः परान् दासीकृत्य तान् यथेच्छं पीडयन्तः प्रतिदिनं पापराशीनर्जयन्त ईश्वरमपि पापसहायं वदन्ति. अहं हि समग्रपृथ्वीलाभापेक्षया धर्मं श्रेष्ठं संभावयामि. युक्तमपीदं—यतः केनाऽपि प्रदत्तां पृथिवीमन्यः कोऽपि बलाढ्यो हर्तुं शक्नोति नैवं धर्मं. धर्मस्तु सम्यगुपास्यमानः सर्वदैव यत्र कुत्रापि देहत्यागादूर्ध्वमपि तस्य कल्याणं करोति. तस्माद्यदि मां महंमदीयधर्मानुसरणे बलात्प्रवर्तयासि तदा प्राणत्यागो मे रोचत इति. स्वपुत्रं प्राणत्यागोद्यतमवलोक्य

तौ वृद्धौ मातापितरौ महंमदीयधर्मस्वीकारेणाऽपि जीवितुं तमवदताम, परन्तु महाभागो हकीकतरायो न स्वनिश्चयं मुमोच. उवाच च--मातः ! अद्य महंमदीयधर्मं स्वीकृत्य जीवन्नितःपरं शतवर्षं जीविष्यामीति अस्ति ते निश्चयः ? नाप्येष प्रान्ताधिपस्तथा प्रतिजानाति. तथा च क्षणभंगुरस्य प्राणस्य कृते शाश्वतधर्मस्य त्यागः श्रेयस्करः स्यात्किमिति.

ततश्च स प्रान्ताधिपः क्रुद्धस्तस्य बालस्य हकीकतरायस्य शिरश्छेत्तुं चाण्डालमादिदेश. स तु चाण्डालो गंभीराकृतेस्तस्य बालस्य हकीकतरायस्य धैर्यमवलोक्य विस्मितः कथमपि महता दुःखेन राजनियोगं पालयामास.

वाचकाः ! यस्मिन्दिने तस्य बालकस्य शिरश्छेदो बभूव तद्दिने वसन्तपंचमी तिथिरासीत्. तेन दुःखेन संतप्ताः सर्वे लाहोरनगरस्थाः सनातनधर्मानुयायिनस्तस्य सत्काराय श्मशानभूमिमगमन्. तत्र यथाविधि तदीयं शवमग्निसंस्कारेण संस्कृत्य गुणगणान्वर्णयन्तः स्वस्वभवनमागच्छन्. अद्यापि हि तत्र वसन्तपंचमीदिने महानुत्सवः संभवति. अस्तु.

यदा चैवंविधाः प्रकाराः प्रतिदिनमभवंस्तदा सर्वेऽपि सनातनधर्मानुयायिनः परं दुःखाकुलाः कर्तव्यतामूढा अभवन्. क्षुद्रा अपि महंमदीया बलिष्ठस्यापि राजसेवकस्य सनातनधर्मानुयायिनः कलत्रादिकमपि बलादहरन्. सम्पदमप्यगृण्हन्. न तान् कोऽपि अशात्. तमिममनर्थमवलोक्य गुरुगोविन्दसिंहस्तथा सर्वेऽपि शीखधर्मानुयायिनः परं समतप्यन्. नानाविधाः प्राचीनाः शीखधर्मशत्रवोऽनुकूलं कालमवलोक्य प्रकटितस्व-

रूपास्तांस्तान् शीखधर्मानुगान् परमपीडयन्.

तेजस्वी गुरुगोविन्दसिंह इमां स्वधर्मानुयायिनां दुरवस्थामवलोक्य खिन्नः संततस्तत्प्रतीकारायाचेष्टत.

## ( मध्यभागः )

१ घोरं तपः.
२ स्वदेशागमनम्.
३ यज्ञः.
४ बलिदानविधिः.

( १ )

एवं सर्वतः समुदितान् स्वशत्रूंस्तथा वर्धमानं दिल्लीश्वरस्य प्रतापमवलोक्येमं समयं स्वप्रतिज्ञापूर्तेरननुकूलं मन्वानो गुरुगोविन्दसिंहो मनसि विचारयामास. यथा हि वर्षासमये गंगाप्रवाहो दुस्तरो भवति तथैव प्रतिदिनं वर्धमानो महंमदीयानां प्रतापः. तत्र च कारणं तेषां शौर्यं न, किंतु भारतवासिनां स्वबन्धुद्रोहौत्सुक्यमेव. अद्यापि चेमे भारतवासिनः सम्यगज्ञातयवनस्वभावाः स्वबन्धुनाशाय तान् साहाय्ययन्ति. तदधुनाऽस्माभिरपि विराम एव स्वीकर्तव्यः. यदा चेमे सर्वेऽपि दुःसहं महंमदीयसंतापमनुभविष्यन्ति, तदा प्रबुद्धास्तस्य प्रतापस्य शान्तये किमपि करिष्यन्ति. यावच्च मानवं क्षुन्न बाधते तावत्स भोजनसामग्रीसंपादनाय न यतते. मनुष्यस्वभाव एवेदृशः. तद्यथा मृगयुः स्वजालं प्रसार्य मृगयूथागमनपर्यन्तं भिन्नमेव तदनुकूलं कर्म करोति तथाऽहं करिष्यामि.

सर्वेषां कार्याणां सिद्धौ तपःसिद्धिरपेक्ष्यते. यथा हि यदृच्छया जनिष्यत एकस्य जन्तोः कृते तदीया माता महादुःखमनुभवति, पिता च चिन्ताजालमग्नो रात्रिंदिवमस्वस्थचित्तो भवति. इयमेव तपश्चर्या नाम. तथैव मदीयप्रतिज्ञासिध्यै मया महादुःखमनुभवनीयमेव. अस्मिन् समये यत्र कुत्रापि निवासापेक्षया यद्येकान्ते स्थित्वा तं त्रैलोक्यनाथं साहाय्यार्थं प्रार्थयिष्यामि तदा तदेव वरं भवेत्. नानाविद्या अप्यभ्यस्याहं बुद्धिसामर्थ्यमपि संपादयिष्यामि. तस्मादधुना हिमालयाश्रयणमेव वरमिति.

विचार्य चैवं स महानुभावो दूरदर्शी गुरुगोविन्दसिंहोऽमृतसरनगरे स्वानुयायिन आव्हयत्. गुरोराव्हानं लब्ध्वापि दिल्लीश्वररोषभिया न सर्वेऽपि तत्रागन्तुं प्राभवन् किंतु ये खलु धीरास्त एव तत्रागच्छन्. गुरुगोविन्दस्तु बहूनां स्वधर्मानुयायिनामनागमनकारणं जानन्नुवाच– वत्साः! भगवता गुरुराजेन श्रीनानकदेवेन स्थापितस्य शीखधर्मस्यैतावन्त एवानुयायिनः? मम पितामहे तथा प्रपितामहे जीवति अगणिताः शीखधर्मानुयायिन इदं स्थलमलंचक्रुः. परन्तु मदीयेन दुर्दैवेनाद्य परिगणिता एव समागताः. अस्य कारणं शीखधर्मानुयायिनां न न्यूनीभावो, न वाऽनुरागाभावो, नवा मयि द्वेषः, किंतु प्रचण्डदण्डस्य दिल्लीश्वरस्य कोप एव. तस्माद्बान्धवाः! अस्मिन् समये तद्विरुद्धं चेष्टयित्वा शलभवन्मरणापेक्षया निभृतं स्थित्वाऽनुकूलसमयप्रतिपालनमेव श्रेयस्करमित्यहं मन्ये. अस्मिन् समये यथा शीखधर्मानुयायिनः परं दुःखाकुलास्तथैव सनातनधर्मानुसा-

रिणोऽपि. तदधुनाऽस्माभिः सनातनधर्मे प्रमाणभूतानां ग्रन्थानां ज्ञानमपि संपादनीयं. तस्मात्केचन तैलप्रज्ञा युवानः प्रथमतः काशीनगरीं गत्वा तत्र संस्कृतभाषां पठित्वा तदीयधर्मग्रंथज्ञानं संपादयन्तु. ततश्च सर्वस्मिन्नार्यावर्ते सर्वत्राटित्वा धर्मोपदेशेन सर्वेभ्योऽपि स्वस्वरूपं निवेदयन्तु. अहं च कतिभिस्तरुणैः समं हिमालयं गत्वा तत्र घोरं तपश्चरिष्यामि. येनाग्रिमं कार्यं सुकरं भवेदिति.

ते सर्वे च शिष्याः स्वीकृत्य गुरोराज्ञां स्वस्वकार्यार्थं यथाप्रदेशमगच्छन्. गुरुगोविन्दसिंहस्तु सुमुहूर्ते कतिपयैस्तरुणैः स्वानुयायिभिः समं हिमालयं तपसेऽगच्छत्.

तत्र च नियमेन योगसामर्थ्यं संपादयन् प्रतिदिनं स्वेन सममानीतेभ्यः शस्त्रकलाविशारदेभ्यस्तास्ताः कलाः संपादयन्नचिरादेवालौकिकसामर्थ्यशाली बभूव. गुरुगोविन्दसिंहो न केवलं बौद्धिकं सामर्थ्यमेव तत्र संपादयामास किंतु शरीरसामर्थ्यमपि. अनवरतमश्वमारुह्य समग्रे दिवसे हरिणयूथमनुधावन्नपि न स्वेदलवेनाभिद्यत. एकेनाऽपि गदाप्रहारेण महान्तमपि पाषाणमवशिष्टचूर्णमकरोत्. अतिदवीयोऽपि लक्ष्यं लीलया भिनत्ति स्म.

( २ )

एवं विंशतिवर्षाण्यविरतं सपरिश्रममुग्रं तपश्चरित्वाऽखण्डब्रम्हचर्यविलसन्मुखकमलः, अर्गलोपमविवृत्तविशालबाहुः, सद्यःप्रफुल्लविशालपुण्डरीकतेजस्विनयनः, कपाटविस्तीर्णवक्षस्थलः, अपर इव भासमानो गुरुगोविन्दसिंहः पुरतः कांश्चिच्छिष्यान्.

प्रेषयित्वा स्वागमनं विख्यापयामास. सर्वेऽपि शीखधर्मानुयायिनो गुरोश्चिरकालिकं दर्शनसुखमनुभवितुमुत्सुकाअपि दुःसहदिल्लीश्वरप्रतापभीता न प्राभवन्. केचनैव गुरुचरणारविन्दसुखं दिल्लीश्वरपीडादुःखादपि श्रेष्ठं मन्यमानाः सहसा स्वनिवासेभ्यो निर्गताः केशगढनामकं स्थलमागच्छन्. गुरुगोविन्दसिंहस्तु तत्रागत्य यावत्पश्यति तावत्तत्र समागतान् कतिपयानेव स्वशिष्यानवलोक्य खिन्नस्तान् जगाद—वत्साः! मयि हिमालयं प्रविष्टे सति शीखधर्मो नामशेषोऽभूत्किं. येन तपश्चर्यालब्धसामर्थ्यं मां द्रष्टुमेतावन्त एव यूयमागताः? श्रीगुरुराजनानकदेवेन स्थापितस्य शीखधर्मस्येत्थं दुर्दशा केन कृता? नात्र दिल्लीश्वरः सर्वथा कारणं? किंतु धर्मे विश्वासाभाव एव. सामान्यतो जना लौकिकं फलमनुसरन्तस्तल्लोभाकुला एव धर्मे प्रवर्तन्ते. विरलाश्च ते, ये लौकिकं फलं तिरस्कृत्य केवलं धर्म एव विश्वसन्ति. बान्धवाः! यथाहि सर्वेषां सुवर्णादीनामुच्चावचत्वप्रदर्शका निकषाः सन्ति, तथाऽयं क्रूरो दिल्लीश्वरः शीखधर्मस्य तथा तदनुयायिनां च निकष एव. तत्र च ज्ञातसत्वाः केवलमेतावन्त एव भवन्तः शीखधर्मानुयायिनोऽवशिष्टाः! अन्ये सर्वे मृत्तिकाचया इव विशीर्णाः! धिगेषां जीवितं. एते च हृदयेन शीखधर्मानुरागं दधतोऽपि केवलं वैषयिकसुखहानिमवेक्ष्य धर्माचरणान्निवर्तन्ते. वत्साः! आसीन्मे मनोरथः. यत्सर्वेऽपि शीखधर्मानुयायिनः स्वस्वकार्याणि विधाय यशस्विनो भूत्वा मां द्रष्टुमागच्छेयुरिति. तेषां चाहमग्रणीर्भूत्वा स्वप्रतिज्ञां पूरयिष्यामीति च. परन्तु कतिपयानेव युष्मानत्र

समागतानवलोक्य स मे मनोरथः समूलं विनष्टः. यद्यपि अहं स्वप्रतिज्ञां पूरयिष्यामि अन्यथा प्राणांस्त्यक्ष्यामि, परन्तु युष्मत्कल्याणार्थं स्थापितस्य श्रीगुरुराजनानकदेववर्धितस्यास्य शीखधर्मस्य कृते यो मे पिता महात्मा तेगबहादुरः प्राणानत्यजत्तदर्थं युष्माभिः किमनुष्ठितं ! यथाहि स्वजना मृतमुद्दिश्य क्षणमात्रं रुदन्ति, तथा युष्माभिरपि कृतमिति मन्ये ! पशूनामेष स्वभावो यत्ते क्षणिकस्मृतयः स्वसजातीयं केनचिद्व्याघ्रेण निहतमवलोक्य क्षणमुद्विग्ना भवन्ति, ततश्च बलवद्भिरिन्द्रियैश्चोदिताः पुनरप्युदरपूरणव्यवसायमारभन्ते. मानवाश्च न तथा. ते यद्यपि समये स्वोदरपूरणार्थं प्रयतमाना अपि न त्यजन्ति पूर्वसंस्कारान्. ते च सदैव जागृतस्मृतयः स्वध्येयं परिपूरयन्त्येव. तत्किमस्य दिल्लीश्वरस्य प्रतापेन सर्वे भारतवासिनः पशुतां प्रापिताः! किंवैतेषां मानवी बुद्धिरेवापहृता ! न जाने को वा दोष एतेषु लग्नो येनान्धाः पुनः पुनः प्रबोध्यमानाअपि न जाग्रति ! अस्तु. अहं तु मन्येऽयं च भगवतः कृपाप्रसाद एव. स हि महाकार्यविधानोत्सुकं मां तत्साधनसामग्रीं परीक्षितुं चोदयति. बहूनां निःसाराणां साहाय्यापेक्षयाऽल्पीयसामपि धीराणां साहाय्यं निःसंशयमधिककार्यकारि ! प्रत्युत कठिने कार्ये बलादेव नियुक्ता असारा जना बलवद्भिर्विघ्नैराक्रान्तास्ततो निवर्तमाना धीरानपि निर्बलान्विदधति. यदा हि स्वल्पोऽपि वातस्तुषकणानपनयति, तदा ते स्वसमूहपतितानल्पांस्तण्डुलानपि स्वेन समं नयन्ति. तस्मात् सारासारभेदं विचार्यैव कार्यारंभः कर्तव्य इति न्याय्यम्. युष्मास्वपि सर्व एव धीरा इति नाहं मन्ये. तद्यु-

ष्माकं परीक्षार्थं तथा भाविनः कार्यस्य निर्विघ्नसिध्यर्थं श्व एव यज्ञं करिष्यामि. तत्र ये खलु परीक्षोत्तीर्णा भविष्यन्ति त एव सत्याः शीखधर्मानुयायिनः, तेषामेव साहाय्येनाहं प्रतिज्ञां पूरयितुमिच्छामीति.

इदं तस्य गुरुगोविंदसिंहस्य वचनमाकर्ण्य सोत्साहास्ते सर्वेऽपि त्वरया स्वसंबन्धिभ्यस्तं वृत्तान्तमकथयन्.

( ३ )

अथ भगवान् सहस्ररश्मिरद्य शीखधर्मानुयायिनां सत्वं तथा तद्गुरोर्गुरुगोविन्दसिंहस्यौजो विलोकयितुकाम इव सत्वरमुदयाचलमारुरोह. सर्वेऽपि शीखधर्मानुयायिनो महति प्रभाते समुत्थाय कृतस्नानाः शुचीभूत्वा तत्स्थलमागच्छन्. पुरोहितश्च यज्ञमण्डपे वेदिं कृत्वा तत्र महाकुण्डं विधाय तत्राग्निं प्रदीप्तमकरोत्. अचिरादेव नियते समयेऽत्युग्ररूपो रक्ताम्बरमालाधारी नग्नखड्गालंकृतदक्षिणहस्तो गुरुगोबिन्दसिंहस्तत्राजगाम. तत्र मिलिताः सर्वे शीखधर्मानुयायिनः स्वगुरोस्तदलौकिकं दिव्यं तेजो द्रष्टुमप्यसमर्था मूकभावमादाय केवलं प्रणेमुः. स च तत्प्रणामान् गृहीत्वा तं मण्डपं प्रविष्टः सर्वानपि शिष्यान् बहिरवस्थानार्थमादिदेश. समग्रे दिने कृतोपवासोऽग्निमाजुहाव गुरुगोविन्दसिंहः. सर्वे शिष्याश्च देवीप्रसादलाभेच्छया बहिः सौत्सुक्यमतिष्ठन्.

( ४ )

अथ स्वभवनं गते भगवति सहस्रकिरणे, सर्वत्र समभावस्थापनाय प्रसरति अन्धतमसे, सर्वेषु केशगढग्रामवासिषु देवी-

प्रसाददर्शनाय समुत्सुकेषु सत्सु स गुरुगोविन्दसिंहः पुरोहितमपि बहिः प्रैषयत्. पुरोहितमपि बहिरागतमवलोक्य ते सर्वेऽपि शिष्याः सावधाना अभवन्.

अचिरादेवाऽश्रावि बधिरितश्रवणकमलः प्रचण्डो विद्युत्पात इव प्रलयमेघनिनाद इव ध्वनिः. सर्वे च तं निशम्य यावद्विस्मिता इतस्ततः पश्यन्ति तावन्नग्नखड्गभूषितदक्षिणहस्तो देवीकृपाविलसन्मुखकमलः श्रीगुरुगोविन्दसिंहः सभामण्डपमागच्छत्. अवोचच्च भीतिविव्हलानधोमुखान् मुकुलितहस्तकमलान् स्वशिष्यान्–वत्साः! इमं खड्गं पश्यत! एष च खड्गः साक्षाद्भगवत्या देव्या मे प्रदत्तः. इमं गृहीत्वा देवीबलेनाहमचिरादेव शत्रुं सराज्यं नाशयित्वा स्वप्रतिज्ञां पूरयिष्यामि. भगवती देवी शत्रुकृतपापैः परं क्रुद्धा बलिं याचते. आदिशच्च मां– वत्स! गुरुगोविन्द! त्वं सर्वान् स्वशिष्यान् वद देवी युष्मानाज्ञापयति गुरुगोविन्दं शीखधर्मरिपुनाशाय साहाय्ययतेति. तद्यदि युष्माकमहं वा प्रमाणं किंवा देवीनियोगो वा, तदा सन्नद्धा भवत! प्रथमतोऽद्य नूतनधर्मसंस्कारो देवीनियोगेन क्रियते. तत्र प्रथमं बलिदानमावश्यकं. तत्सर्वानपि वः पृच्छामि–कः खलु सकलभाग्योदयकारणस्य देवीप्रसादस्य संपादनायात्मानं बलिं विधातुमिच्छति? बान्धवाः! स्वार्थत्यागं विना न सम्पदस्तथा भाग्योदयो वा लभ्यः. तस्माद्यदि कोऽपि स्वात्मानं देव्यै वितरितुं नेच्छति तदा तथैव वक्तव्यं, येनाहं स्वयमेवात्मानं बलिं विधाय देवीं प्रसादयिष्यामि. यदि कश्चन समर्थः स्यात्तदा सोत्थायात्रागच्छत्विति.

अनवसित एव गुरुगोविन्दसिंहस्य भाषणे धीरो बलवान् कश्चन तरुणः समुत्थायाग्रे समागत्य गुरुचरणारविन्दमनमत्. तस्मिन्नेव क्षणे तं गृहीत्वा सभान्तर्गृहं प्रविश्य तत्र तं तरुणं निभृतं स्थापयित्वा तत्र स्थापितस्याजस्य शिरश्छित्वा तद्रुधिराक्तं तमेव खड्गं गृहीत्वा बहिरागतोऽवदत्. देवी द्वितीयं बलिं याचत इति. असमाप्त एवास्मिन् वचसि समुत्थाय पुरतः समागतं द्वितीयं तरुणं गृहीत्वा पूर्ववदेवान्तर्गतः स गुरुगोविन्दः पुनरपि बहिरागत्य जगाद—देवी ताभ्यां द्वाभ्यां बलिभ्यामसंतुष्टा शत्रुपापक्रुद्धा बुभुक्षापीडिता भूयो द्वौ बली याचत इति. अस्मिन् समयेऽपि एको ब्राह्मणस्तथैकः क्षत्रिय आत्मानमर्पयामासतुः. तावादाय गुरुगोविन्दसिंहः सभान्तर्गृहं प्रविष्टः क्षणमतिष्ठत्.

## ( चरमो भागः )

१ नूतनधर्मसंस्कारः.
२ राजनीतिचातुर्यम्.
३ दिल्लीपतिना सह संग्रामः.
४ पुत्रद्वयबलिदानं.
५ दाक्षिणापथगमनं. स्वर्गवासश्च.

### (१)

स च तस्मिन्नेव क्षणेऽभिनवरक्तवस्त्रमण्डितैर्देवीप्रसादविलसन्मुखकमलैः सद्यःशाणोल्लिखितखड्गालंकृतकरैस्तैः चतुर्भिर्वीरैः समं सभामण्डपमागच्छत्. तांश्च दिव्याभरणवसनान् पंचाऽपि वीरानवलोक्य सर्वे विस्मितास्तादृशदैवप्रसादासंपादने-

नात्मानं वंचितं मन्यमाना निनिन्दुः. वीरश्रेष्ठो गुरुगोविन्दसिंह-स्तेषां मनोरथं जानन् सहासमुवाच. वत्साः ! ये देशहितार्थं तथा धर्मरक्षणार्थं स्वदेहं तृणीकुर्वन्ति, त एव स्वातंत्र्यं लभन्ते. अस्तु. श्व एतान्नूतनसंस्कारसंस्कृतान्विधाय तेभ्यः सर्वे वयं दीक्षां ग्रहिष्याम इति.

अथ द्वितीये दिने महति प्रत्यूषे समुत्थितः स गुरुगोविन्द-सिंह एकाग्रमनसा परमात्मानं ध्यात्वा स्वप्रतिज्ञापूरणे साहाय्य-यितुं प्रार्थयत. ततश्च समुपस्थितान् सर्वान्शिष्यगणानवलोक्य सभामण्डपमाजगाम. सर्वेऽपि शीखधर्मानुयायिनः कीदृशोऽयं नूतनः संस्कार इति जिज्ञासाकुलास्तं सभामण्डपमागच्छन्. गुरु-गोविन्दसिंहश्च तैः चतुर्भिर्वीरैः सममुच्चासनमुपविष्टः सर्वाञ्जगाद. वत्साः ! इदानीं वयं नूतनं संस्कारं कुर्मस्तत्सावधानेन तिष्ठतेति. अथ शीघ्रमेव गुरुपत्नी सर्वामपि नूतनसंस्कारस्य सामग्रीं गृहीत्वा तत्रैवाजगाम. गुरुगोविन्दश्चोत्थायैकस्मिन् महति रजतमये पात्रे शर्करामयानि मिष्टान्नानि निक्षिप्य तत्र च जंबीररसं निक्षिप्य मधुराम्लं पेयमकरोत्. ततो गुरुपत्नी तान् सर्वानपि पूजयित्वा नीराजनेन नीराजयामास. गुरुगोविन्दश्च परमात्मानं ध्यात्वा तीर्थोदकेन तान् शिरसि औक्षत्. ततश्च तस्य पेयस्य पानार्थं ताना-दिशत्. तेऽपि गुर्वाज्ञां शिरसांऽगीकृत्य 'विजयतां गुरुदेवः ! विजयतां शीखधर्मानुयायिनः ! इति उच्चैरुद्घोषयन्तस्तत्स्वल्पम-पिबन्. ततो गुरुगोविन्दोऽपि तेभ्य ईदृशीमेव दीक्षां स्वयं जग्राह. पपौ च तत्पेयं. एवंवृत्ते स वीरश्रेष्ठो गुरुगोविन्दसिंहः सर्वानुद्दिश्याभाषत. वत्साः ! अयमेव शीखधर्मस्य नूतनः

संस्कारः. इत ऊर्ध्वमनया रीत्यैव नूतनाः शीखधर्मानुयायिनो भविष्यन्ति. यद्यपि पुराऽस्मिन् शीखधर्मे तथा जातिभेदो नासीदेव, तथापि गुरुशिष्यभेदस्तु आसीदेव. शिष्याः परानुग्रहार्थमसमर्थमात्मानं मन्यमाना गुरुमेवापैक्षन्त. तेन शीखधर्म एकमानवहस्तगत एवाभूत्. तेन परस्परं तादृशी प्रीतिर्न बभूव. यावत्कालं मानवेषु परस्परं बन्धुभावो न समुद्भवति, तावत्ते परेषां दुःखमात्मीयमेवाऽमन्यमानास्तत्परिहाराय न परियतन्ते. यथा स्ववत्सरक्षणाय पिता तत्परो भवति, न तथा परपुत्रपालने. तस्मादस्मिन् समये परस्परपालनाय गुरुशिष्यभावमहं सर्वानुगतं करोमि. येन गुरुं विनाऽपि परोपकारविधाने समर्थाः शिष्या एव शीखधर्मदीक्षां परेभ्यो वितीर्य तं धर्मं प्रसारयेयुः. बान्धवाः ! इतऊर्ध्वं शीखधर्मस्य तत्वानीमानि—

१ अस्मिन् धर्मे जातिनिर्बन्धो नास्ति.

२ ये केऽपि अनेन संस्कारेण संस्कृताः पंच शीखधर्मानुयायिनो मिलित्वा नूतनं यं कमपि शीखधर्मानुयायिनं विधातुं समर्थाः.

३ नूतनसंस्कारसंस्कृतेन शीखधर्मानुयायिना ‘ सिंह ’ नाम धारणीयं.

४ शीखधर्मानुयायिना पंच ककारा अवश्यं पालनीयाः. ते च यथा—केशाः, कंकतं, ‘ कट्यार ’ ( छुरिका ) कडा ( आयसं चक्रं ) कच्छ इति.

५ इमे सिंहोपनामकाः सर्वेऽपि शीखधर्मानुयायिनो बान्धवा एव. न तेषु जातिभेदः.

६ शीखधर्मानुयायिना युद्धकलाविशारदेन वीरेण भाव्यं.
७ समरभूमौ निपतितः शीखधर्मानुयायी स्वर्गं गच्छत्येव
८ यज्ञोपवीतं न धारणीयम्.
९ ग्रंथश्रेष्ठं विहायान्यः कोऽपि न नमनीयः.
१० सनातनधर्मनियमा न पालनीयाः. परन्तु यवनेभ्यो रक्षणीयाः.
११ यवनकुलोच्छेदविधानं शीखधर्मानुयायिनः पवित्रमाद्यं कर्म.
१२ गुरुनानकदेवस्य शिष्यत्वसंपादनेऽभिमानो धारणीयः.
१३ अमृतसरनगरं मुख्यं तीर्थं मत्वा तत्र गन्तव्यमेव.
१४ यदा कश्चन शीखधर्मानुयायी अपरं स्वधर्मबन्धुं पश्येत्तदा—विजयतां गुरुदेवः, विजयन्तां शीखधर्मानुयायिनः, इति शब्दानुच्चार्याभिवादनीयः.
१५ केनापि शीखधर्मानुयायिना तमाखुपत्रं न सेवनीयं. इति.

वत्साः ! इत ऊर्ध्वं सर्व एव शीखधर्मानुयायिनः शिष्या-गुरवश्च. ते च परस्परपालनार्थं रात्रिंदिवं यथा जागरूका भवेयु-स्तथाऽस्माभिः प्रयतनीयं. श्रीगुरुराजनानकदेवमारभ्य यत् खलु गुरुत्वं शीखधर्मनायकत्वापरपर्यायं मयि आसीत्तत्सर्वमद्य युष्मभ्यो मया समर्पितं. अद्यारभ्य सर्वे यूयं शीखधर्मस्य नायका एव. तदेनं धर्मं नाशयत वा ! रक्षत वा ! सर्वथा यूयमेव-युष्मान् रक्षितुं समर्थाः. इति.

गुरुगोविन्दसिंहस्येदं भाषणं निशम्य सन्तुष्टाः सर्वेऽपि

शीखधर्मानुयायिन इमामाज्ञां स्वीचक्रुः. इदं वृत्तं निशम्य सर्वेऽपि अधस्तना वर्णाः शीखधर्मानुयायिनो भूत्वा गुरुगोविन्दसिंहस्यानुयायिनोऽभवन्. वाचकाः! केवलं पंचदशदिवसेषु अशीतिसहस्रसंख्याकाननुयायिनः स वीरश्रेष्ठोऽलभत. अस्तु.

( २ )

एवमनुयायिनो लब्ध्वा स गुरुगोविन्दसिंहो व्यचिन्तयत्—अगणितं खलु दिल्लीश्वरस्य बलं. तदधुना तस्मिन्नेव बले उपजापो योजनीयः. इदं खलु बलमस्माकमेव. तथापि अज्ञानतः परस्परं कलहायमानानां नो बुद्धिभेदं जनयित्वा सुखेनास्माकं बलेनैवास्मान् दासीकृत्य सुखेन जीवन्ति दिल्लीश्वरप्रभृतयः. तदस्माभिरपि स एवोपायो योजनीयः, इमे पर्वतीया राजानो यद्यपि दिल्लीश्वरस्य सामन्तास्तथापि तं निभृतं द्विषन्ति. अस्माकं च प्रतिवेश्मिन इमे. तद्यदि उपजापिता इमेऽस्मत्पक्ष्या भविष्यन्ति तदा महत्कार्यं स्यात्. वयं च सर्वे मिलित्वा तं बलाढ्यमपि दिल्लीश्वरं पिपीलिकाः सर्पमिव पराजेष्यामह इति.

विचिन्त्य चैवं स दूरदर्शी गुरुगोविन्दसिंह उत्तरार्यावर्तवासिनः सामन्तानुपजापेनात्मपक्षपातिनो विधातुं प्रायतत. तेऽपि महंमदीयानां दुर्वर्तनैः संत्रस्ताः स्वातंत्र्यसंपादनोत्सुका एवासन्. ते च सर्वतःप्रसारि गुरुगोविन्दसिंहस्य यशस्तथा तदीयानुयायिनां संहतिमवलोक्य तस्य गुरुगोविन्दसिंहस्य मतमंगीचक्रुः. आगच्छंश्च तेऽमृतसरनगरं गुरुगोविन्दसिंहस्य दर्शनाय. वाचकाः! पारतंत्र्यनरके पतिता मानवा एतावद्बुद्धिशून्या भवन्ति, यत्ते स्वकीयानामैश्वर्यं विलोक्यासूयान्वितास्तान्द्विषन्ति. सज्जनाः! पारतंत्र्य-

नरकपतितभ्यो मानवेभ्यस्तथा पुरीषे लुठताञ्जन्तूनां न कोऽपि विशेषः. यतो दिल्लीश्वरेण प्रतिदिनं निष्पिडिता अपि दुःखाय-माना अपि मूढा इमे पर्वतीया राजानोऽपि शीखधर्मानुयायिभिः प्रदत्तं श्रीगुरुगोविन्दसिंहस्यैश्वर्यमवलोक्य सासूया अजायन्त. तथापि अप्रकटितस्वहृदयास्तूष्णीमतिष्ठन्.

तस्मिन् समये आसामनराधीशो महात्मनस्तेगबहादुरा-द्गृहीतशीखधर्मोपदेशो हिमालयात् प्रत्यागतं गुरुगोविन्दसिंह-माकर्ण्य सानन्दः सोपायानं तं द्रष्टुममृतसरनगरमागच्छत्. उपायनत्वेन चोत्तमानश्वांस्तथा रत्नानि शस्त्राणि च गुरवे समर्पयत्. गुरुरपि तस्मै प्रसादत्वेन योग्यमेव वस्तुजातं वितीर्य जगाद. नराधिप ! त्वमसि क्षत्रियकुलोत्पन्नः. अनाथानां परिपालनाय खलु युष्मानसृजद्भगवान्नारायणः. सम्प्रति तु इमे महंमदीयाः सर्वानपि नस्तृणीकृत्य यथेच्छं वर्तन्ते. अनाथा भारतभूः पारतंत्र्यदुःखानि सोढुमशक्नुवाना युष्मादृशां साहाय्यं याचते. तद्भवद्भिरपि अधुना सावधानेन स्थातव्य-मिति. तमिममुपदेशमंगीकृत्य स्वदेशं प्रयाते तस्मिन्नराधीशे तत्र समवेताः पर्वतीयराजा लोभाकुलास्तानि उपायनवस्तूनि बलाद-वांच्छन्. तांश्च बलात्कारेण तेषां वस्तूनां संपादन उद्यतान् वीक्ष्य कोपाकुलो गुरुगोविन्दसिंहोऽवदत्—राजानः ! यदि सत्य-मेवैतेषु वस्तुषु युष्माकं वांच्छा, तदा युष्मभ्यं तानि दास्यामि. परन्तु एतत्प्रदानं दानमेव. यदि तु भवन्तो बलाद्गृहीतुं वांछन्ति तदा न ददामि. प्रत्युत युष्मान् शास्यामि ! इति. ते च कोपविनष्टमतयो योध्दुमुद्यता अभवन्. गुरुगोविन्दसिंहः स्वज-

ननाशेऽनुत्कोऽपि कर्तव्यपालनाय निष्कोषीकृतखड्गः सर्वथा तानजयत्. ततस्ते क्षमायाचकाः पुनरपि गुरुगोविन्दसिंहस्य सामन्ततां स्वीकृत्यात्मानमरक्षन्.

एवं तान् दण्डयित्वा विजयी गुरुगोविन्दसिंहो दिल्लीश्वर-सैन्यप्रतीकारं विधातुमिच्छुः सर्वानपि स्वधर्मानुयायिन आहूय सैनिकान् व्यधात्. प्रतिदिनं युद्धशिक्षणेन सुशिक्षितास्ते सर्वे शीख-धर्मानुयायिनः शाणोल्लिखिता मणय इव दुःसहतेजसोऽभवन्. सर्वे च ते प्रकृत्यैव शूरा बलिष्ठा युद्धशिक्षणेन संस्कृता उत्साह-परिपूर्णाः स्वगुरुं गोविन्दसिंहमानन्दयामासुः. तदानीमेव गुरु-गोविन्दसिंहः स्वशिष्योपायनलब्धं तथा शीखधर्मानुयायिभिर्ध-नाढ्यैर्वितीर्णं धनमेकत्रीकृत्य तेन चत्वारि महान्ति दुर्गाणि विरचयामास. तेषां च नामानि लोहदुर्गं, विजयदुर्गं, पुष्पदुर्गं, आनन्ददुर्गमिति.

( ३ )

दिल्लीश्वरोऽवरंगजेबः प्रबलं महाराष्ट्रस्वराज्यस्य संस्थापकं वीरं विजेतुकामो दक्षिणापथं गतः स्वचारमुखादिमं सर्वं वृत्तान्तमशृणोत्. व्यचिन्तयच्च—अहं खलु इमान् महाराष्ट्रवीरान् शासितुमत्रागतः. पश्चान्मया नियुक्ता राज्याधिकारिणः क्षुद्रमपि राजद्रोहिसंघं न नाशयितुं शक्नुवन्ति. जीवति मयि यदेयं दशा तदा स्वर्गं गते मयि अस्य मोंगलराज्यस्य कीदृशी स्थितिः स्यात्. अस्तु. अतिविचारस्तापायैव भवति न पुनः श्रेयोलेशायाऽपि. सम्प्रति तु मदीयसैन्येन विजितकल्पा इमे महाराष्ट्रवीराः. एषां च नायकस्य स्वर्गं गतस्य शिवराजस्य स्नुषा तथा तदीयो नप्ता बन्दीकृतोऽत्रैवास्ते. तस्मादधुना इतो निवर्त्योत्तरार्यावर्तवासिनः

शीखधर्मानुयायिनो नामशेषाः करणीयाः. तथा तत्रस्था एव राजद्रोहिणः सामन्ता अपि.

किंच यथोत्तरार्यावर्तं सुरम्यनदीमातृकं मदीयं राज्यमुपकरोति न तथाऽयं दक्षिणापथः. यदि च दक्षिणापथविजयाशामग्नोऽहमुत्तरार्यावर्तगतान् शीखधर्मानुगानुपेक्षिष्ये तदा ममाभिजनं प्रति गमनमपि दुःखेन स्यात्! हिमालयदरीमार्गं विनाऽन्यो मार्ग एव न मदीयमभिजनं गन्तुं. तदिदानीं प्रथमतः शीखधर्मोन्मूलन एव प्रयत्नः करणीय इति.

विचिन्त्य चैवं सत्वरं स्वयमेव दिल्लीनगरमागत्य सर्वान् स्वसेनापतीनाहूय तैः सह मंत्रं कृत्वा पर्वतीयराजभ्यो वार्षिकं करद्रव्यं ग्रहीतुं 'मियाखां, अलीफखां, झुलपिकारखां, नामकान् त्रीन् सेनापतीन् ससैन्यं प्रेषयामास. ते च पर्वतीयराजाः श्रीगुरुगोविन्दसिंहं नायकीकृत्य तेन करदानाय निषिद्धाः स्वसैन्यानि गृहीत्वा तया यवनसेनया समं योध्दुं सन्नद्धा अभवन्. ते च 'नादोन–'नामके ग्रामे यवनसेनामपश्यन्. महंमदीयदुर्वर्तनैः संजातसंतापास्ते तदानीमेव युद्धमारभन्त. संख्ययाऽधिकानपि नूतनशस्त्रमण्डितानपि तान् वेतनसैनिकांस्ते स्वधर्मरक्षणार्थं गृहीतसैनिकव्रताः सहसा पराजयन्त. गुरुगोविन्दसिंहस्तु प्रत्यागतांस्तान् पर्वतीयराजान् परमभ्यनन्दत्.

अथ दिल्लीश्वरेण प्रेषितां यवनसेनां पर्वतीयराजैः शीखधर्मानुयायिनां साहाय्येन पराजितामवलोक्य क्रुद्धः स दिल्लीश्वरेणोत्तरार्यावर्तस्य रक्षणाय नियुक्तो महंमदीयो दिलावरखांनामा राजपुरुषः स्वसेनामादाय स्वयं पर्वतीयराजानाक्राम्यत्. स्वपुत्रं

रुस्तुमखाननामानं गुरुगोविन्दसिंहस्याक्रमणाय प्रैषयत्. अस्मिन् समये गुरुगोविन्दसिंहः स्वानुयायिभिः सममानन्दपुरेऽवसत्. रुस्तुमखानश्च स्वसैन्येन समं तदानन्दपुरं निरुध्य तस्थौ. तस्मिन्नेव दिने भगवान् वरुणस्तथा ववर्ष, यथा तस्य नगरस्य समीपवाहिनी नदी जलातिरेकपरिपूर्णा तीरे निवसतो यवनसैनिकान् यमालयं प्रेषयामास. वर्षाजलक्लिन्नांगा अवशिष्टाः सैनिकास्तथाश्वाश्च भयंकरहिमपीडिताः प्राणानमुंचन्. शीखधर्मानुयायिनश्च यवनसैनिकानामीदृशीं दुर्दशामवलोक्य खिन्नास्तान्नापीडयन्. सोऽपि रुस्तुमखानो गुरुगोविन्दसिंहं विजेतुमात्मानमसमर्थं मन्यमानो निभृतं न्यवर्तत.

दिल्लीश्वरश्च निशम्य स्वसेनापतीनां पराजयं परं क्रुद्धः स्वपुत्रं सुलतानमोअज्जीमनामानं सर्वमप्युत्तरार्यावर्तं शासितुं प्रेषयामास. स तु राजपुत्रः स्वसेनया समं लाहोरनगरमागत्य स्थितो मिरजाबेगनामानं सेनापतिं गुरुगोविन्दसिंहस्य तथा पर्वतीयराजानां शासनाय प्रेषयामास. स च गर्वोन्मत्तः सर्वैरपि पर्वतीयराजैस्तथा पराजितो यथा महता क्लेशेन लाहोरनगरं प्रत्याजगाम. एवं बलाढ्यांस्तान् पर्वतीयराजानवलोक्य भीतो दिल्लीश्वरः सत्वरं सेनया समं पुनरपि नूतनान् सेनापतीन् स्वपुत्रस्य साहाय्यार्थं प्रैषयत्. आदिशच्च तान्—यूयं महता प्रयासेन पर्वतीयराजांस्तथा गुरुगोविन्दं विभिन्नस्थले लब्ध्वा पराजयध्वम्. ऐक्यभावमापन्नस्तृणसमूहोऽपि दुर्जेयो भवति. परन्तु एकाकी हस्त्यपि सुजेयो भवति. तस्मात् सावधानेन वर्तमाना विजयशालिनो भवतेति.

तेऽपि युद्धकलाविशारदाः स्वागमनं न प्रकटीकृत्य सहसाऽऽगत्य श्येनवत्तांस्तान्पर्वतराजान्विभिन्नान्विधाय क्रमशः पराजयन्त. ते तु स्वल्पबला अकस्मादागतां बलवतीं यवनसेनामवेक्ष्य भीतिविव्हला अन्यतः साहाय्यागमनमसंभवं मन्यमानाः शरणीकृत्य पुनरपि दिल्लीश्वराय करद्रव्यं दत्वा तदीयं स्वामित्वं स्वीचक्रुः.

गुरुगोविन्दसिंहस्तु तान् साहाय्ययितुं त्वरया समागच्छन् मार्ग एवेदं वृत्तमशृणोत्. तेन दुःखाकुलः स व्यचिन्तयत्—हा हन्त मे दौर्भाग्यं ! वयं च मिलिता अपि क्षणमात्रं नैकभावेन स्थातुं शक्नुमः. इमे पर्वतीया राजानो बलवद्भिर्यवनसैनिकैराक्रान्ताः क्षणमात्रमपि धैर्यमवलंब्यायुध्वा सहसा तं दिल्लीश्वरं शरणमगच्छन्. क्लेशैर्विना कथं सौख्यलाभो भवेत् ? अहं चाधुनैकाकी संवृत्तः. स च पापी क्रूरकर्मा राजनीतिचतुरोऽधुना यवनसैनिकानयोधयित्वा मूढानिमानेव पर्वतराजान् मन्नाशाय योजयेत्. योजिताश्चानायासेन दुर्बला भविष्यन्ति. अहमपि नामशेषो भविष्यामि. भगवति ! भारतभूमे ! कस्त्वया महानपराधः परमेश्वरस्य कृतो येन स्वातंत्र्यसुखभोगिषु सकलेषु पृथ्वीविभागेषु सकलजगन्मान्यां त्वामेव पारतंत्र्यनरके निपतितां तथैव स स्थापयति ! इमे वयं त्वदीयाः पुत्राः पारतंत्र्य एव सुखं मन्यमानाः पशुवदन्येषां भारहरा भवामः ! अस्य शीखधर्मस्यानुयायिनः स्वल्पाः. दिल्लीश्वरस्याक्रान्तसमस्तभारतवर्षस्य सामर्थ्यमनन्तं. तथापीदानीं कर्तव्यं तु करणीयमेव. यद्यप्यस्मिन् समयेऽहं यशस्वी न भविष्यामि, तथापि मदीयामवस्थां वीक्ष्या-

न्येऽपि साहसमवलंब्य कर्तव्यपरा भवेयुः. यथा तथा वा भवतु. सर्वथा यथाशक्ति प्रतीकारविधानं विना गत्यन्तरमेव नास्तीति.

गुरुगोविन्दसिंह एवं विचार्य सर्वेषां स्वधर्मानुयायिनां महतीं सभां चक्रे. निवेद्य तेभ्यः सर्वां परिस्थितिं कर्तव्यमपृच्छत्. तेऽपि दिल्लीपतिनाशार्थं कृतप्रतिज्ञाः स्वप्राणनाशपर्यन्तं साहाय्यदानाय प्रत्यजानन्.

अचिरादेव गुरुं गोविन्दसिंहं कीर्तिपुरवासिनं चारमुखान्निशम्य दिल्लीपतिविसृष्टौ 'ख्याजामहंमद-नाहरखांनामानौ' सेनापती बलाढ्येन सैन्येन समन्वितौ सत्वरमागत्य कीर्तिपुरमरुन्धताम्. न्यवेदयतां च तमन्तःस्थितं गुरुगोविन्दसिंहं-यदि भवान् सत्वरं बहिरागत्याऽस्मदधीनो भूत्वा दिल्लीश्वरं शरणं गमिष्यति तदा भद्रं भविष्यति. परन्तु दुराग्रहदोषदूषितमानसो यदि तथा न करिष्यसि तदा त्वं स्वप्राणान् गमयित्वा परेषामपि वृथा प्राणान् गमयिष्यसि. तत् कतरत्ते रोचत इति वद. वयं च वृथा मानवसंहारं नेच्छाम इति.

इदं च तयोः संदेशमाकर्ण्य कुपितः स गुरुर्गोविन्दसिंहस्ताभ्यामिदं प्रत्युत्तरमदात्–दिल्लीश्वरसेनापत्योरिदं भाषणं शोभत एव. यो हि दिल्लीश्वरो मदीयं पितरं निरपराधमवधीत्तमहं कथं स्वस्वामिनं मन्येय. मामपि स हन्तुमेवेच्छति. एवंस्थिते श्ववच्चाण्डालहस्तेन मरणापेक्षया समरभूमौ वीरवद्यथाशक्ति शत्रुसैनिकान् हत्वा पतनं सत्यमेव निःश्रेयस्करं मह्यं रोचते च. तदधुना वृथा कालयापनं विहाय शस्त्रालंबनमेव विधेयं. तदेव साम्प्रतं न्याय्यान्याय्यविचारोपयोगीति.

द्वितीय एव दिनेऽनुदितकल्प एव भगवति भास्करे यवनसेना कीर्तिपुरमाक्रन्तुमारभत. तत्र मिलिताः शीखधर्मानुयायिनः शौर्येणाद्वितीया अपि संख्ययाऽत्यल्पाः प्रलयकालपयोधिवत् क्रमेण वर्धमानां तां यवनसेनां रोध्दुं नाशकन्. परन्तु क्षणमात्रं तैः रुद्धायां यवनसेनायां गुरुर्गोविन्दसिंहो महता जवेन बलाढ्यं दुर्गमानन्दनामकमागतः सपरिवारं तत्रैवातिष्ठत्. अन्येऽपि यथाशक्ति यवनसैनिकांस्तनूकृत्य विजयाशां त्यक्त्वा तत्रैव प्रत्यागच्छन्. तौ च यवनसेनापती अपि गुरुं गोविन्दसिंहमन्यत्रगतमाकर्ण्य तदानन्ददुर्गमेवागच्छताम. तत्रापि घोरं युद्धमभवत्. तत्र च स्थितः स महात्मा गुरुर्गोविन्दसिंहः केवलं कारागारदुःखमसेवत. ते च यवनसैनिका रात्रिंदिवं जागरूका गुरुमपालयन्. गुरुर्गोविन्दसिंहस्तथा तदनुयायिनो दुर्गरोधाशिथिलीकरणाय प्रयतमाना अपि नैव यशस्विनोऽभवन्. यथा यथा दुर्गावरोधः प्रबलोऽभवत्, यथा यथा च दुर्गस्थाऽन्नसामग्री न्यूनाऽभवत्तथा तथा गुरुर्गोविन्दसिंहश्चिन्ताव्याकुलः परमजायत. अन्ते चैकस्यां रात्रौ केवलमवशिष्टान् पंचाशत्स्वानुयायिनस्तथा स्वपुत्रौ स्वभार्यां चाहूय कर्तव्यं विचारयामास.

( ४ )

तस्मिन्दिने मध्यरात्रे सर्वेषु यवनसैनिकेषु प्राकारवलयाद्बहिः सावधानेन तदानन्ददुर्गं प्रतिपालयत्सु सत्सु, एकस्मिन् प्रासादे मिलितास्ते सर्वेऽपि पराजयदुःखाकुलाः शीखधर्मानुयायिनो गुरोर्गोविन्दसिंहस्यागमनं प्रतिपालयामासुः. अचिरादेव स्वप्रतिबिंबाभ्यामिव योग्याभ्यां स्वपुत्राभ्यामनुयातो निर्विकारवदन-

कमलो मूर्तो धैर्यमेरुरिव जंगम उत्साह इव गुरुगोविन्दसिंह-स्तत्रैवाजगाम. तैः स्वानुयायिभिः कृतान् प्रणामान् स्वीकृत्य यथोचितमासनमासीनः स वीरश्रेष्ठो गुरुगोविन्दसिंहोऽवदत्—वत्साः ! अयं च निर्वाणसमयः समायातः. अद्यापि परमेश्वर इमां भारतभुवं तथा तदीयान् दीनान् पुत्रान्नानुग्रहीतुमिच्छति ! मन्येऽद्याप्यवशिष्टं भारतवासिनां संचितं दुष्कर्म. तत् खलु कदाचिच्छीघ्रमेवोपभुक्तं नश्येत्. तदस्मिन् समये केनाऽपि-साहसिकेनावश्यं प्रयत्नः करणीयः. स च सफलोऽपि भवेत्. तद्यथा दुर्भिक्षेऽपि अन्नमन्नभित्युक्त्वा प्राणानुत्सृजत्स्वपि प्रिय-पुत्रेषु योग्यः कृषीवलो भाविधान्यलोभेन बीजानि स्थापयति, तथैव कांश्चिद्वीरानहं रक्षितुमिच्छामि. तत्कथयत ! के वाऽऽ-जन्मब्रम्हचर्यं चरित्वा रात्रिंदिवं मदीयां प्रतिज्ञां पूरयितुं यति-ष्यन्ते. तानितो निभृतं निष्कासयित्वा स्वयमत्रैव स्थित्वा युध्यमानः प्राणांस्त्यक्ष्यामि. सत्वरं वदत ! के वेदमसिधारा-व्रतं पालयितुमिच्छन्ति ? सम्प्रति कालक्षेपो न श्रेयस्कर इति.

स्वगुरोस्तथा पितुश्चेदं भाषणमाकर्ण्य दुःखाकुलास्ते सर्वेऽपि शिष्या उत्थाय प्रत्यवदन्. गुरुदेव ! यथा युष्माकं प्रतिज्ञा तथैवास्माकं. परन्तु जीवत्सु अस्मासु गुरुचरणान् यः क्रूरया दृष्ट्या पश्येत्तदा तं यमालयं निःसंशयं प्रेषयिष्यामः. तदद्यैव गुरुचरणैः सपरिवारमितो निर्गत्यान्यत्र गन्तव्यं. वयं च यथा-शक्ति यवनसैनिकैः समं युध्यमाना वीरोचितां गतिं लप्स्यामह इति.

तेषामिदं भाषणं निशम्य सन्तुष्टः स गुरुगोविन्दसिंहः

स्वपुत्रावाह--वत्सौ ! युवाभ्यामन्यत्र गत्वा मदुक्ता प्रतिज्ञा परिपालनीया. युवयोरप्यत्रावस्थितयोरवश्यं श्रीगुरुराजनानक-देववंशो नामशेषो भवेत्. दुष्टस्य दिल्लीश्वरस्य परमेतदाभिमतं. तद्रात्रौ निभृतमितोनिर्गत्यापरस्थले स्थित्वा मदीयां प्रतिज्ञां पूरयतं! अहं च मम पितृवद्युवयोः कल्याणमभिवांच्छन् प्राणान्विसृजामीति.

तौ च वीरौ स्वपितुर्योग्यतां जानन्तौ मुकुलीकृतहस्तौ सविनयमवोचताम्. तात! त्वादृशः पिता जन्मशतैरप्यलभ्यः. न केवलं पवित्रः सदाचारी किंतु सकलगुरुगुणसमन्वितः. यदि कालोऽनुकूलस्तेऽभविष्यत्तदा दिल्लीश्वरः क्षुद्रमशकवत्कदैव नामशेपोऽभविष्यदिति नास्ति कस्यापि संशयः. त्वं हि एतावत्कालपर्यन्तं दीर्घां तपश्चर्यां चरित्वाऽलौकिकं सामर्थ्यमलभथाः. त्वादृशं बुद्धिचातुर्यं तथा लोकादरो नावयोः. आवां च त्वदीयेतरशिष्यवत् केवलं त्वदाज्ञापरिपालनयोग्यावेव. किंच तात ! वयं सर्वेऽपि त्वदुक्तप्रतिज्ञापालनार्थमेव जीवामः. यदि च योग्यः कश्चित् प्रतिज्ञासिद्धिभारमुद्वहेत्तदेदानीमेवास्य दुर्गस्य द्वाराण्युद्घाट्य यथाशक्ति युध्वा स्वर्गं गच्छामः. परन्तु त्वदीयप्रतिज्ञापूरणयोग्यो न त्वत्तोऽन्यः कोऽपि. बलाढ्यो दिल्लीश्वरः समग्रं भारतवर्षं पालयन् कथमावाभ्यां सुजेयः स्यात्! यदा ह्यावयोः पितामहः स्वप्राणान् व्यसृजत्तदा त्वां स्ववैरनि-र्यातनक्षममेव मत्वाऽऽत्मानं दिल्लीश्वरक्रोधाग्नौ जुहाव. आवां च केवलं त्वदाज्ञापालनमेव स्वकर्तव्यं मन्यमानौ कथं त्वां त्यक्त्वा त्वदारब्धकार्यनिर्वाहक्षमौ स्याव ! तदधुना त्वमात्मा-

नमेव रक्ष. यथा कर्तव्यपालनमावश्यकं न तथा स्वजीवपालनं! तस्मात्कृत्स्नस्य शीखधर्मस्य तथा त्वद्गुरोश्च प्रतिज्ञापालनाय रात्रौ निभृतमितो निर्गत्यान्यत्र गत्वा पुनर्नूतनान् सहायान संपाद्य प्रतिज्ञापूरणं विधेहीति आवयोर्मतं. आवां तु त्वया सह बलान्निर्नीपितावपि नागच्छावः, यतो भावीतिहासकारास्त्वामेकाकिन एव स्वशिष्यानत्र विहाय सपुत्रं गच्छन्तमवश्यं स्वार्थपरं निदर्शयेयुः. सा चाकीर्तिर्माभूदिति आवामप्यत्रैव निवसावः. वस्तुतस्तु त्वादृशस्य गुरोः कः पुत्रेषु तथा शिष्येषु भेद इति.

गुरुगोविन्दसिंहस्तु तयोः स्वपुत्रयोरिदं सर्वथानुरूपं प्रतिवचनमाकर्ण्य सन्तुष्टः सानन्दमुवाच— वत्साः! सत्यमेव यूयं शीखधर्मानुयायिनः. बलाढ्यो दिल्लीश्वरोऽधुना यद्यपि युष्मान्विजेष्यते, तथापि यस्मिन् स्थले युष्माकं रुधिरं निपतेत्ततः सहस्रशः शीखधर्मानुयायिनः समुत्पन्ना दिल्लीश्वरं पराजेष्यन्ते. शिष्याः! प्रत्येकं मामाश्रिपत. एष गुरुगोविन्दसिंहो युष्मान प्राणेभ्योऽपि प्रियानत्र त्यक्त्वा स्वप्राणरक्षणार्थं नान्यत्र याति, किन्तु प्रतिज्ञापालनाय शीखधर्मरक्षणाय च. तन्मनसि खेदं मा कुरुत. एष हि मानवस्य धर्मो यः पशुवत् परपादाघातान सहमानो न जीवति. तद्यथाशक्ति यवनान् हत्वाऽन्यत्राहं गच्छामि. इति.

सती गुजरीदेव्यपि स्वपुत्रस्य गुरुगोविन्दसिंहस्य भाषणमन्वमोदत. तस्मिन्नेव क्षणे यवनसैनिकान्निद्राधीनानवेदयत कश्चन सैनिकः. ते च पंचचत्वारिंशत्संख्याकाः शीखधर्मानु-

यायिनो गुरुपुत्रौ स्वनायकौ विधाय तं गुरुगोविन्दसिंहं दुर्गरोधाद्बहिः प्रेषयितुं सन्नद्धा अभवन्.

तेच शीघ्रमेव दुर्गद्वारमुद्घाट्य यवनसैनिकानाक्रम्य घोरं युद्धं प्रावर्तयन्. तौ तु द्वौ यवनसेनापती जागरूकावकस्मादागतमाक्रमणमवेक्ष्य भीतिविव्हलान् स्वसैनिकानाश्वासयितुं त्वरया तत्राजग्मतुः. तौ च वीक्ष्य स गुरुगोविन्दसिंहः सिंह इव कोपाकुलो महता वेगेन युध्यमानस्तं नाहरखाननामानं सेनापतिं नामशेषमकरोत्. द्वितीयं च गाढखड्गप्रहारेण मूर्च्छितं. स्वसेनापत्योरिमां दशामालोक्य संभ्रान्तेषु यवनसैनिकेषु तौ पुत्रौ गुरुगोविन्दसिंहमन्यत्र गमनाय विज्ञापयामासतुः. सोऽपि तौ तथाऽवशिष्टान्शिष्यान् शुभैराशीर्वचनैस्तथा गाढाश्लेषेण संभाव्य पंचभिरनुयायिभिरनुयातोऽन्यच्चमकोरनामकं दुर्गं ययौ. तत्पुत्रौ चावशिष्टैः स्वानुयायिभिः समं पुनरपि तदेवानन्ददुर्गं प्रविश्य द्वारं पिधायातिष्ठताम्.

अथोदिते भगवति सवितरि ते सर्वेऽपि यवनसैनिकाः परं कोपाकुलाः स्वनायकवधप्रायश्चित्तदानार्थं दुर्गद्वाराणि दग्ध्वाऽन्तः प्राविशन्. अवशिष्टाः शीखधर्मानुयायिनः शूराः सावधाना यथाशक्ति योध्दुं सन्नद्धा अभवन्. पितामहीं गुजरीदेवीं नमस्कृत्य तौ तेषां सर्वेषामपि शूराणामग्रेसरौ भूत्वा घोरं युद्धं प्रावर्तयताम्. अगणितान् यवनसैनिकान् हत्वा तावतुलं युद्धकौशलं सर्वेभ्यः प्रादर्शयताम्. यदा च क्रमेण न्यूनीभवन्तः शीखधर्मानुयायिनः सहायाः नामशेषा अभवन्, यदा च तयोर्हस्ताभ्यां खड्गावपि शत्रुसैनिका अहरंस्तदा ज्येष्ठो गुरुगोविन्दसिंहस्य पुत्रः कनिष्ठमाह—जोरावरसिंह ! अधुना युद्धेन नास्ति

प्रयोजनं. यद्धि प्रयोजनमासीत्तत्तु सिद्धमेव. अधुना वीरोचितं धैर्यमवलम्ब्य कालप्रतीक्षां कुर्व इति.

यवनसैनिकाश्च तौ द्वावपि गुरुपुत्रौ फत्तेसिंहजोरावरसिंह-नामानौ बन्दिनौ विधाय दिल्लीपतिना तयोः सेनापत्योः साहाय्याय प्रेषितस्य वजीरखांनाम्नः सेनापतेः संनिधिमानयन्. सोऽपि तौ कारागारे स्थापयित्वा दिल्लीश्वरं कर्तव्यमपृच्छत्. पापी दिल्लीश्वरश्च गुरुगोविन्दसिंहेन निहतं निहतकल्पं च स्वसेनापति-द्वयमाकर्ण्य कोपाकुलस्तदानीमेव समागतं तत्पुत्रद्वयबन्दीकरण-वृत्तमाकर्ण्याऽत्यन्तं सन्तुष्टः तत्पितामहवत् क्रौर्येण तयोः प्राणहरणाय सेनापतिमादिशत्. प्रैपयच्च पत्रं—सेनापते ! यथा मया निहतो महात्मा तेगबहादुरस्तथैवेमौ तन्नप्तारौ त्वया घातनीयौ. ये खलु सामान्यतो जनास्त एव सर्वत्राधिक्येन कस्मिन्नपि कार्ये. तस्मात् कार्यस्य नाशं चिकीर्षुणा प्रथमत इमे साधारणा जना दूरीकरणीयाः. तत्र चोपायोऽयमेव. मया परमक्रौर्येण दण्डितं स्वगुरुमवलोक्य साधारणाः शीखधर्मानुयायिनः परं भीता निभृतमतिष्ठन्. तत एव गुरुगोविन्दसिंह एतावत् स्वल्पं बलं साहाय्यत्वेनालभत. तस्मादतिभयंकरेण दण्डेन यदि तौ योक्ष्यसे तदा क्षणादेव निःसहायं गुरुगोविन्दसिंहमपि लप्स्यस इति.

स च वजीरखाननामा सेनापतिर्दिल्लीश्वरस्य स्वस्वामिन इदमनुज्ञावचनमाकर्ण्य सन्तुष्टस्तौ बन्दीकृतौ गुरुपुत्रौ स्वपुरत आनीय सरोषमपृच्छत्—रे रे मूढमती ! युवाभ्यां राजद्रोहो विहित एव. न केवलमयमेक एवापराधो युवयोः किंतु अस्माकं नाहरखाननामा सेनापतिरपि युवाभ्यामेव निहतः. प्रथमत एव

युवां तस्य राजद्रोहापराधलब्धशिरश्छेदस्य तेगबहादुरस्य नप्तारौ, दिल्लीश्वरघातविधानविहितप्रतिज्ञस्य गुरुगोविन्दसिंहस्य पुत्रौ. तस्मादविचारेण शासनार्हावेव, तथापि अन्यायेन प्राणहरणं न दिल्लीश्वराय रोचत इति सार्वजनीनं. तदेवं तदीयं यशः स्मृत्वाऽहं युवां पृच्छामि—किं युवाम् महंमदीयधर्मानुसारिणौ भूत्वा जीवितुमिच्छतं, अथवा क्षुद्रस्य शीखधर्मस्य दुरभिमानं धृत्वा प्राणान्विस्रष्टुं. अहं तु मन्येऽयं मर्त्यलोकः केवलं सुखोपभोगाय भगवता निर्मितः. तत्र स्थित्वा यथाशक्ति सुखोपभोगो ग्राह्य इति खलु मानवस्य कर्तव्यं. अद्यापि युवां नोन्मिषच्छ्मश्रुजालौ किमिति जीवनं त्यजतं. तन्महंमदीयधर्ममनुसृत्य दिल्लीश्वरेणानुगृहीतौ सुखेन कालक्षेपं कुरुतमिति.

तस्य सेनापतेर्वजीरखानस्येदं भाषणं निशम्य स्मेरवदनौ तौ गुरुपुत्रौ किंचित्कालं तूष्णीमतिष्ठताम्. ततश्च कनीयसोऽनुमत्या ज्येष्ठः फत्तेसिंहः प्रत्युवाच. सेनापते ! त्वमसि किंकरः खलु दिल्लीश्वरस्य. अद्यावधि ये खलु भारतवर्षस्य स्वामिनो दिल्लीश्वरा अभवंस्तेषु सर्वेषु अपि अयं दिल्लीश्वरो मूर्तिमान् यम एव. यादृशो हि स्वामी तादृशा एव तदीयाः सेवका अपीति सामान्यतोऽस्ति नियमः. यदि दिल्लीश्वरो मदीयं पितामहं वृथाऽवधीत्तदा स आवयोस्तन्नप्त्रोः किं कुर्यादिति प्रश्न एव नोपपद्यते. त्वादृशा हि सेवका दिल्लीश्वरं स्वस्वामिनं सन्तोषयितुं किं किं न कुर्युः ! एवं स्थितेऽस्माभिः सर्वैरपि जीवनाशा पूर्वमेव त्यक्ता. आवाभ्यां महात्मनः सकललोकमान्यस्य गुरुगोविन्दसिंहस्योदरात् प्रादुर्भूताभ्यां समग्रे जन्मन्यपि जीवनाशा न कृता किंतु स्वप्रतिज्ञा-

पूरणे यथाशक्ति साहाय्यविधानस्यैवाशा धृता. मम पितुर्गुरु-
गोविन्दसिंहस्य प्रतिज्ञा तु सकललोकविदिता सराज्यस्य दिल्ली-
श्वरस्य नाशः कर्तव्य इति. तदावां कथं खलु महंमदीयधर्मा-
नुसारिणौ भूत्वा दिल्लीश्वरस्य सेवकौ भवेव ! किमावयोः
परमपवित्रं परममान्यैः श्रीगुरुहरगोविन्दप्रभृतिभिः स्वजननेन
पवित्रीकृतं कुलं न प्रियं ? किं गुरुराजश्रीनानकदेवमुखकमला-
न्निर्गतः शीखधर्मो वा न प्रमाणं ? किं पितामहस्य महात्मन-
स्तेगबहादुरस्यानल्पकोपानलसंतप्त आत्मा न प्रियः ? किंवा
प्रियजनकवधरोषकलुपितमनसो रात्रिंदिवं स्वप्रतिज्ञापूरणाय
प्राणानपि तृणीकुर्वतस्तस्य पुण्यश्लोकस्य पितुः परमवन्द्यौ चरणौ
न प्रमाणं ? येनावां स्वधर्मत्यागेन परधर्मानुसरणमुपदिशसि !
अयं हि मर्त्यलोकः केवलं यथाशक्ति वैषयिकसुखस्य भोगाय
भगवता निर्मित इति त्वादृशाः पापा मन्यन्ते. परन्तु तन्न
सत्यं. यद्येवं तदा पशुजातिभ्यो मानवजातेर्विशेषः कः ?
पशवो हि स्वोदरपूरणार्थं प्रयतमाना इन्द्रियवशाः कदापि
स्वकर्तव्यं न जानन्ति. नैवं मानवजातिः. मानवजातिष्वेव
नानाविधा उत्तमोत्तमाः साधवः स्वदुःखानि अगणयित्वा
परेषां दुःखानि परिहर्तुं प्रयतमाना धर्मसंस्थापकाः प्रादुर्भूताः !
एभिश्च स्वोपदेशद्वारा वाऽन्येनोपायेन वा स्वर्गादपि श्रैष्ठ्यं
प्रापितमिमं मृत्युलोकं त्वादृशानां शृंगपुच्छहीनानां स्वामिनो
दिल्लीश्वरसदृशो नरराक्षसा दूषयन्ति ! नरकलोकसाम्यं प्रापयन्ति
च ! यो हि क्षुद्रो जीवः स्वस्य क्षणिकस्य विषयसुखस्य लोभे-
नागणिताञ्जीवान् पीडयति, यश्च स्वधर्मप्रसारमिषेण स्वराज्य-

वर्धनलोभाकुलः कृमिवत्सर्वान् मानवान् क्लिश्नाति, स एव मानवश्चेत्तदाऽहमीश्वरं विज्ञापयामि–ईदृशीं मानवजातिमोत्पादयेति. वयमघोरविषयतृष्णैः पशुभिः सममेव वर्तमानाः सुखेन जीवनं यापयिष्यामः. सेनापते ! ईदृशस्य नृशंसस्य दिल्लीपतेः सेवको भवान्न जानाति तस्य क्रौर्यं. परन्तु वयं सर्वेऽपि भारतवर्षवासिनो विशेषतश्च शीखधर्मानुयायिनः सम्यग्जानीमः. निसर्गत एव शमप्रधाना भारतवर्षवासिनः परमात्मसेवापराः संसारचिन्तायामुदासीना यदि तस्य नाशमिच्छन्ति तदर्थं प्रयतन्ते, तदा कथय कियद्वा तस्य पापिनो दिल्लीश्वरस्य दुराचारित्वं! अयं च शीखधर्मः श्रीगुरुराजनानकदेवेन दीनजनोद्धारार्थमेव स्थापितः. परमात्मनामग्रहणेन दुराचारेभ्यः साधारणप्रज्ञाञ्जनान्निवर्तयिष्यामीति मन्यमानेन श्रीनानकदेवेनायं नूतन एव धर्मो निर्मितः. परन्तु गुरुमर्जुनसिंहं निष्कारणं बन्दिनं कुर्वता राज्यमदोन्मत्तेन दिल्लीश्वरेणायं धर्म ईदृशीमवस्थां प्रापितः. अस्तु. किं गतस्मरणेन. ईदृशं बलात्कारेण धर्मप्रसारं वीक्ष्य महंमदोऽपि लज्जाव्याकुलः स्यात्. तस्मादावामानन्देन प्राणपरित्यागमंगीकुर्वः. न तु परधर्मस्वीकारमिति.

तस्येदं भाषणं स्वस्वामिनिन्दामयं तथा स्वधर्मनिन्दाप्रचुरमाकर्ण्य कोपाकुलः स वजीरखानः क्रुद्धस्तौ गुरुपुत्रौ भित्तिमध्ये निधाय हन्तुमादिशत्. यवनसेवकाश्च भित्तिं विदार्य पुरुषद्वयसमावेशयोग्यं छिद्रं व्यरचयन्. श्रुत्वाऽपि तादृशकठोररीत्या देहान्तशासनाज्ञां तौ निर्विकारावेवातिष्ठताम्. ततश्च सर्वाँ

छिद्रपूरणसामग्रीं सन्नद्धामवलोक्य स वजीरखानस्तौ हस्त-पादे सम्यङ्निगडयितुं सेवकानादिदेश. यवनसेवकेषु हस्तपादं लोहशृंखलया निगडयत्सु सत्सु तौ वीरवरौ स्वधर्मपरिपालनदक्षौ गुरुपुत्रौ किमपि दुःखं न प्रादर्शयताम्.

अथ तस्मिन् छिद्रे स्थापयितुं सेवकैरुत्थापितौ तौ गुरु-पुत्रौ सहासमुवाच वजीरखानः—दैवहतका यूयं भारतवर्ष-वासिनः! ये खलु यूयं रात्रिंदिवं धर्मधर्मवादिनः संसारसुखानि भोक्तुं न शक्नुत! यो हि धर्म इहलोके सुखं न ददाति स परत्र सुखं दद्यादित्यत्र मूर्खं विना को विश्वसेत्. ? यो हि जामाता स्वयं जीवन् स्वभार्यायां पुत्रमुत्पादयितुं न समर्थः, स मृतः सन् कथं तां पुत्रवतीं कुर्यात्? वयं च यद्यपि धर्मं प्रमाणीकुर्मस्तथापि विषयसुखाविरोधेन. अस्माकं धर्मो हि परान् हत्वा तदीयां भार्यां तथा संपदं च निःशंकमात्मवश्यां विधातुं कथयति. अहं तु भूयो भूयो महंमदीयमस्वीकारेण दिल्लीपतिं तोष-यितुं युवामुपादिशं परन्तु दुर्दैवपीडितौ युवां न मनस्यकुरुतम्. तदिदानीं स्वर्गं गत्वा तत्रत्यं सुखमनुभवतमिति. उक्त्वा चेत्थं तत्र छिद्रे तौ स्थापयितुं सेवकानाज्ञापयामास. पितामहीं गुजरीदेवीं तयोरवस्थां द्रष्टुं तत्रानयत्. तां च स्वनप्त्रोर्दुरवस्थां विलोक्य शोकाकुलां वीक्ष्य तौ वीरश्रेष्ठौ सहासमगदताम्. पितामहि! त्वमसि धैर्यखनेर्गुरुगोविन्दसिंहस्य माता. त्वदीयः पुत्रो गुरुगोविन्दसिंहः स्वपितृवधदुःखितः स्वप्रतिज्ञापालनाय प्राणत्यागदुःखेभ्योऽपि गरीयांसि दुःखान्यनुभवति. त्वदीयः पतिर्महात्मा तेगबहादुर आवयोः पितामहो निष्कारणमनेन

नरराक्षसेन दिल्लीश्वरेण निहतः. स एवावां हन्ति चेत्किमत्राश्चर्यं! यदाऽवयोः पितामहो महात्मा तेगबहादुरो दिल्लीश्वरमुखाच्छिरश्छेदनियोगमशृणोत्तदा स स्वल्पमपि दुःखं यदि नामन्यत, तदाऽऽवाभ्यां दुःखं करणीयं किं? त्वयाऽपि शोकः करणीयो वेति. तां चैवमाश्वास्य विरतौ तौ यदा समग्रमात्मानं पूरितमपश्यतां, तदा शान्तमनसौ परमात्मानमस्तौताम्. नाथ! जगदाधार? सत्यपक्षपातिन्! किं खलु भारतवासिभिर्महापातकं कृतं! यद्भोगार्थमस्मानीदृशैः क्रूरैर्दण्डैर्दण्डयसि? ईदृशैर्नृशंसैः कर्मभिर्वा बलाढ्यो दिल्लीश्वरोऽधोगतिं न गच्छेत्! अस्मादृशोऽगणिताः प्राणिनो यदा दुःसहैरीदृशैः क्लेशैः प्राणान्मुंचेयुस्तदैव न्याय्यान्याय्यविवेकदक्षः परमात्मा दयार्द्रो भूत्वाऽस्माकं बान्धवानुद्धरेत्. भाविन इतिहासकाराः स्वलिखितेषु ग्रंथेषु न्यायसंपादनार्थं बलीभूतानस्मानादरेण निदर्शयेयुः. परमात्मन्! यदि पुनर्जनयितुमावामिच्छासि तदा गुरुगोविन्दसिंहस्यैवोदराज्जनय. शीखधर्मानुसारिणौ च विधेहीति.

अनवसित एव तयोश्चरमवाक्ये यवनसेवकैर्मुखभागो गाढेन पंकेन विलिप्त एव. तथापि शान्तमानसौ तौ यत्किंचिदपि नाचेष्टताम्. गुजरीदेवी तु स्वनप्त्रोरिमां दुरवस्थामालोक्य भूमौ वेगेन पतिता प्राणान् व्यजहात्.

वाचकाः! अस्मिन् शीखधर्मे यैः खलु स्वप्राणसमर्पणं कृतं तेषु सर्वेष्वपि अनयोर्गुरुगोविन्दसिंहपुत्रयोर्वधो निःसंशयं श्रेष्ठ इति सर्वसंमतं. यद्यपि गुरुणाऽर्जुनसिंहेन तथा महात्मना तेगबहादुरेण कष्टेन स्वप्राणाः समुत्सृष्टास्तथापि तत्र तादृशक्लेशा

नाभवन् यादृशा आभ्यां समनुभूताः. जीवद्भ्यां मृतवद्भित्तिमध्ये निवासः कियद्दुःखकर इति त एव जानन्ति यैरीदृशो भयंकरः प्रसंगः समनुभूतः स्यात्! धन्यास्ते शीखधर्मानुयायिनो यैरेतादृशानि दुःखान्यनुभूय स्वशीलं रक्षितं. वयं च विषयसुखलोभाकुलाः क्षणमात्रमपि दुःखं तद्वियोगसंभवं सोढुं न शक्नुमः. दूरे च प्राणत्यागः. कपर्दिकालोभेन स्वधर्मं तथा स्वशीलं हातुं समुद्यता वयं किं तेषामेव यशोधवलितदिङ्मण्डलानां नः पूर्वजानां वंशजाः! तेषामेव पुण्यसंचयैरयं सनातनधर्मोऽद्याप्यवशिष्टो न तु अस्माकं वराकाणां बलेन. वयं चैतावद्दौर्बल्यं प्राप्ता यदुदरपर्याप्तान्नलोभेन स्वधर्मं तथा स्वशीलं परेषां पादेषु निक्षिपामः. तत एवेदृशी दुर्गतिः! अस्तु. महाभागाः! वीरवरौ तौ गुरुपुत्रौ निहत्य दिल्लीश्वरेण वृथा पापमर्जितं. तौ तु शाश्वतयशोरूपतां लब्ध्वाऽमरतां प्राप्तौ.

( ५ )

गुरुगोविन्दसिंहश्चमकोरदुर्गान्निर्गत इतस्ततो वनाद्वनान्तरं पर्यटत्. अचिन्तयच्च—मया च सर्वान्विहायात्रागतेन महदनुचितं कृतं. वृद्धा मे माता सुकुमारौ द्वौ पुत्रौ प्राणप्रियाः शिष्या मां विना तैः क्रूरैर्यवनैर्बन्दीकृताः कथं स्वशीलं रक्षेयुः! कथं स्वधर्मं प्रतिपालयेयुः! कथं च स्वपूर्वजानां कीर्तिं परिपालयेयुः! अहं चेतस्ततः पर्यटंल्लोकान् युद्धार्थं प्रोत्साहयन्नपि न संतोषं लभे. इमे भारतवासिनः प्रकृत्यैव सात्विकाः सहसा स्वशत्रूणामपकारे राजसा न भवन्ति. यथा च काठिनमयः स्वल्पेनाग्निना न प्रतप्यते तथैव भारतवासिनां मनः. अद्यपर्यन्तं दिल्लीश्वर-

कृतानपराधांस्तत्स्वल्पानेव मन्यते. इयं हि सात्विकी स्थितिरुत मरणावस्था! न जाने किमत्र सत्यमिति. सम्प्रति ये खलु दिल्लीश्वरसामन्तास्ते च सर्वेषां स्वबन्धूनां दुरवस्थामालोक्याऽपि प्रतिकर्तुं नोत्सहन्ते. यद्यपीदं सत्यं तथापि उद्योगाद्विरमणं कापुरुषस्य लक्षणं. निष्कारणं मम पितुः शिरश्छिन्दता दिल्लीश्वरेण वृथा कोपितोऽहं तन्नाशाय प्रतिज्ञामकार्षम्. तादृशप्रतिज्ञापूरणाय मया यावज्जीवं प्रयतनीयमेव. तदत्रौदासीन्यस्यावसर एव नेति. विचार्य च स दीर्घोद्योगी गुरुगोविन्दसिंहः स्वानुयायिनः पुनरेकत्रीकर्तुं फिरोजपुरनामकं नगरमगच्छत्. तत्र च यथाकथंचिद्वर्तमानः पुनरपि स्वानुयायिन एकत्रीकृत्य दिल्लीश्वरानियुक्तानुत्तरार्यावर्तपालकान् यवनानजैषीत्. यद्यपि वीरश्रेष्ठो गुरुगोविन्दसिंहस्तदानीं विजयी बभूव, तथापि तदनुयायिनामल्पसंख्याकत्वेन बहवोऽनुयायिनः समरभूमावशेरत. तेन सहायहीनो भूयोऽपि स्वानुयायिनामेकत्रीकरणायान्यत्र ययौ. स च मुक्तसरनामके नगरे निभृतं वसन् कस्यचित् स्वानुयायिनो मुखात्स्वपुत्रयोः कष्टेन प्राणत्यागमशृणोत्. तं च तेन शीखधर्मानुयायिना कथितं प्राणत्यागवृत्तान्तमाकर्ण्याऽन्ये तत्र स्थिता जनाः परमशोचन्त, परन्तु वज्रहृदयो धैर्यसागरो वीरश्रेष्ठो गुरुगोविन्दसिंहो यत्किंचिदपि स्वमनो न दुःखप्रवणमकरोत्. जगाद च—धन्यौ तौ मदीयपुत्रौ! एवंरीत्या ताभ्यां मदीयं यशो रक्षितं! एवमेव प्रत्येकेन शीखधर्मानुयायिना वर्तनीयं! परिवर्तिनि संसारे मृतः को वा न जातः! सर्वेऽपि कालमुखं विशन्त्येव परन्तु कतिपय एवैतादृशयशो-

भाजो भवन्ति. यथैव पर्यंके स्थित्वा मरणं तथैव भित्तिमध्ये निःश्वासप्रतिबन्धेन. कस्तत्र विशेषः. केवलं द्वितीयमरणेन प्रचुरयशोलाभ एव विशिष्यते. स च यैर्गृहीतस्ते निःसंशयं धन्याः! किंच–वत्साः! वयं सर्वेऽपि सांसारिका जना असारादस्मात् कायात् सारं किमप्युद्धर्तुं प्रयतामहे. तच्च यदि यशोरूपमनायासेन लभ्यते तदा कः खलु प्रज्ञावांस्तत्तिरस्कुर्यात्! तस्मात्ताभ्यां समीचीनमेव कृतामिति.

गुरुगोविन्दसिंहश्च ततोऽपि निर्गत्य 'हांसी–' नामकनगरस्य समीपेऽवसत्. तत्र च पुनरपि स्वानुयायिन एकत्रीकृत्य दिल्लीश्वरनाशाय प्रायतत. दिल्लीश्वरश्च चारमुखाद् गुरुगोविन्दसिंहं पुनरपि प्रत्यागतं सर्वेषां शीखधर्मानुयायिनामेकीकरणाय प्रयतमानमाकर्ण्य खिन्नः परं चिन्ताकुलो मनसि विचारयामास–इमे भारतवर्षवासिनो दूर्वांकुरसदृशा भूयो भूयः परं छिन्ना अपि पुनरपि प्रादुर्भवन्ति. एष गुरुगोविन्दसिंहः स्वपितृवधकोपाकुलो रात्रिंदिवं मन्नाशाय प्रयतते. इतश्च दक्षिणापथे बलाढ्या महाराष्ट्रीयाः संघशः समुत्थिताः प्रतिदिनं मत्प्रेषितान् बलभारसमन्वितानपि सेनापतीन्विजित्य स्वतंत्रा भवितुमिच्छन्ति. यदि च समग्रोऽपि दक्षिणापथः स्वतंत्रो भवेत्तदा महती हानिः स्यात्. तस्मादयं गुरुगोविन्दसिंहः स्नेहभावं प्रदर्श्य दिल्लीनगरमाहूय च प्रतिबन्धे स्थापनीयः. विजित्य च महाराष्ट्रीयान् सर्वं च दक्षिणापथं निर्वीरं विधाय पश्चादिममपि योग्येन दण्डेन दण्डयिष्यामीति.

विचिन्त्य चैवं स दुरात्माऽवरंगजबो गुरुगोविन्दसिंहायैकं

पत्रमलिखत्— तच्चेत्थम्. शीखधर्मगुरो ! गुरुगोविन्दसिंह ! तव च स्वधर्मनिष्ठामवलोक्य परमहं सन्तुष्टोऽस्मि. निसर्गतश्च सत्यधर्मनिष्ठस्यान्यः सत्यधर्मनिष्ठः प्रियो भवतीति वयं सर्वत्र पश्यामः. अहं च महंमदीयधर्मस्यैकनिष्ठः सेवक इति सुप्रसिद्धं लोके. एतावत्कालपर्यन्तं शीखधर्मविरोधोऽपि मया महान्कृतः, परन्तु तत्र कारणं न द्वेषः किंतु शीखधर्मसत्यतापरीक्षणमेव. अस्मिन् भारतवर्षे ये केचनालसा जना विद्यन्ते, ते प्रतिदिनं नानाविधान्निष्प्रमाणकान् धर्मपथान् कल्पयित्वा दीनाञ्जनान् पीडयन्ति. तदर्थमहं प्रथमतः सर्वानपि पीडयामि. तस्मिन् पीडने ये खल्वाभासरूपास्ते मृगजलवन्नश्यन्ति. ये च सत्यास्ते तथैव वर्तमाना वर्धन्ते च. साम्प्रतं मया पुनःपुनर्निपीड्य परीक्षितोऽपि अयं शीखधर्मो वर्धत एव. तेनायं सत्य इति मे मतिर्जाता. तस्मात्तद्गुरुं त्वां योग्येनादरातिशयेन सेवितुं राजधानीमाव्हयामि. यद्यपि त्वदीयः पिता मया निहत इति सत्यं, तथापि अत्रागतो मदीयमादरातिशयं निरीक्ष्य संतुष्टः स्या इति.

गुरुगोविन्दसिंहश्च तत्पत्रमवलोक्य हसंस्तस्योत्तरमिदमदात्. कपटिशिरोमणे ! दिल्लीश्वर ! त्वादृशो हि मानवो धर्मनिष्ठो भवेदिति अहं स्वप्नेऽपि न विश्वसिमि. ये जना महंमदीयधर्मानुसारिणो वा शीखधर्मानुसारिणो वा स्वलोभं न्यूनीकर्तुं प्रभवन्ति त एव धर्मनिष्ठा भवितुमर्हन्ति. येषां तु अनिवार्यस्य विषयसुखलोभस्य परिपूरणमेव ध्येयं, ते कदाऽपि केनाऽपि उपायेन धर्मशीला भवितुं नार्हन्ति. त्वादृशा हि लोभाकुला जनाः स्वलोभपरिपूर्त्यै धर्मस्य मिषं कुर्वन्ति. यथाहि मृगयुर्मृ-

गलोभनार्थं नानावेषान्बिभर्ति, तथैव त्वमपि धार्मिकवेषं. परन्तु त्वं सत्यं जानीहि अयं गुरुगोविन्दसिंहस्त्वदीयान् स्नेहालापान् प्रखरद्वेषगरलप्रचुरान्निशम्य कदापि दिल्लीनगरमागत्य कारागारनिवासदुःखभाक् न भवेदिति. पापमते! यो हि स्वपितरमवधीत्, शतशः सर्वेषां पुरतः स्वधर्मग्रंथं हस्ते धृत्वा शपथं विधाय पुनरपि स्वबन्धुं सर्पदंशैरघातयत्तस्य वचसि पशुरपि न विश्वसेत् किं पुनर्बुद्धिमान् मानवः. इह जगतीतले न कोऽपि चिरंजीवी, नापि कस्यचिद्राज्यं शाश्वतं. विनष्टे पुण्यसंचयेऽवश्यमेव बलाढ्योऽपि राजाऽधोगतिं गच्छति. त्वं हि मन्यसे सर्वानपि येन केनाप्युपायेन दासीकृत्याहमेक एव पृथ्वीपालको भविष्यामीति. परन्तु यः सर्वज्ञः सर्वानपि मानवानसृजत्, यश्च समग्रां पृथिवीं परिपालयति, सर्वेऽप्याकीटेभ्यो जीवा यत्कृपया जीवन्ति, स चराचरपालकः परमात्मा कथं तत् सहेत! उन्मत्तं कुमार्गगामिनं बलाढ्यं दीनपीडकं रावणं घातयितुं रामचन्द्ररूपेणावतीर्णस्य तस्येममेवाशयं बालोऽपि वदेत्! परन्तु राज्यमदोन्मत्तास्त्वादृशा अन्धा राजानः कथं विद्युः! अयं हि गुरुगोविन्दसिंहस्त्वदीयवाक्ये विश्वस्य दिल्लीनगरं नागच्छेदित्यत्र न कोऽपि विशेषः परन्तु त्वदीयां कृतिं सम्यक् जानन् कोऽपि बालकोऽपि त्वयि न विश्वसेत्! पाप! यानि त्वया कुकर्माणि कृतानि तेषां कटूनि फलानि भगवान् दद्यादेव, परन्तु सर्वत्राविश्वासं दर्शयता त्वया निद्रासुखमपि न लभ्यत इतीहलोक एव त्वत्कर्मणां महाफलं. जडमते! त्वदीयं मार्गमनुसरन्तः सर्वेऽपि महंमदीया सनातनधर्मानुयायिनो निरति-

शयं पीडयन्ति. यद्यप्यधुना भारतवर्षवासिनो दुर्बलास्तथापि निर्बलो मार्जारोऽपि स्वीयजीवने निराशो बलिष्ठमपि मानवं हन्ति, तदा सर्वेऽपीमे भारतवासिनः समये प्रकटितपौरुषाः कथं निरतिशयां पीडां सहेरन्! अस्माभिः सत्वप्रधानैः केवलमीश्वराराधनतत्परैरगतिकैः केवलं स्वसंरक्षणाय शस्त्रं गृहीतं. नैषनो धर्मः! शीखधर्मस्याऽपि नेदं प्रधानं ध्येयं! परन्तु यस्मिन समये मदान्धानां युष्माकं पीडनादिभिरस्माकं जीवनमेव दुर्लभमभवत्तदा सर्वैः शीखधर्मानुयायिभिः शस्त्रं गृहीतं. तदाप्रभृत्येय ते सर्वेऽपि स्वरक्षणाय तथा दुष्टैर्महम्मदीयैर्बलातिरेकेण पीडितानां निरपराधानां दीनानां रक्षणाय च प्रायतन्त. अयं च धर्ममार्गः—तथा चानुशासनं—

॥ शस्त्रं द्विजातिभिर्ग्राह्यं यदा धर्मो विरुध्यते ॥ इति.

तदित ऊर्ध्वं नरकलोकगतं, तत्र च नानायातनाभिः परिपीड्यमानमेव त्वां द्रक्ष्यामि, न पुनर्भूमिगतमिति सत्यं जानीहीति.

दिल्लीश्वरश्च वार्धक्यपीडितो बलिष्ठानां प्रतिदिनं वर्धमानानां महाराष्ट्रीयाणां वृद्धिमवलोक्य चिन्तातुरो भूयो भूयो दिल्लीनगरमागन्तुं गुरुगोविन्दसिंहं विज्ञापयामास. परन्तु गुरुगोविन्दसिंहो न जगाम.

अथ कतिपयैर्मासैर्वीरश्रेष्ठो गुरुगोविन्दसिंह उत्तरार्यावर्ते स्वानुयायिन एकत्रीकुर्वन्दिल्लीश्वरं शीखधर्मकालं तमवरंगजेबं परलोकगतमश्रृणोत्. स तु तया वार्तया खिन्नोऽपि उत्तरार्यावर्तं स्वातंत्र्यसुखमग्नं विधातुकामः प्रथमं बलाढ्यमपि दिल्लीश्वरं

पराजित्य कथं महाराष्ट्रीयैः स्वातंत्र्यं संपादितमिति द्रष्टुकामो दक्षिणापथमाययौ. वाचकाः! यद्यपि वीरश्रेष्ठो गुरुगोविन्दसिंहः संकल्पेन तरुण एव, तथापि तदीयं शरीरं नानाविधदुःखाना-मनुभवेन जीर्णं मातृपुत्रवियोगसंभवाभिराधिभिः क्षीणं शिशिर-र्तुपल्लवसाम्यं दधार. तथापि स वीरश्रेष्ठः स्वप्रतिज्ञापालनो-त्सुको महतोत्साहेन स्वकर्तव्ये जागरूक आसीत.

एवं क्रमेण दक्षिणापथमागन्तुं प्रवृत्तः स वीरश्रेष्ठो गोदावरीतीरमाजगाम. तत्रापारजलप्रवाहसंभारभासुरं, अनेक-सुरभिकुसुमविनम्रागणितपादपं परमपवित्रगोदावरीसलिललह-रीवातशीतलं, सपरिश्रमं कृषीवलैर्निर्मितैः परमरुचिरधान्य-मण्डितैः क्षेत्रैरलंकृतं, क्वचिच्च नीडस्थितैः पक्षिगणैस्तोष्ट्रूयमानं, क्वचिच्चोग्रतरनक्रसहस्रभयंकरं, क्वचिच्च भक्ष्यार्जनस्थितबला-काश्रेणीधवलं, क्वचिच्च तृष्णार्तगजयूथपादक्षेपसाबाधं, क्वचिच्च स्नानव्यग्रभावुकजनभासुरं, क्वचिच्च जलक्रीडासक्तरमणीगण-मुखकमलैरतिशोभमानं, क्वचिच्च मत्स्यजालविक्षेपव्यग्रमात्सि-कगणं, विविधजीवाश्रितं संसारमिवापरं प्रशान्तं तद्गोदा-वरीतीरमालोक्य संजातानन्दस्तत्रैव कंचित्कालमुवास. तत्र निवासेन च लब्धस्वास्थ्यः स वीरश्रेष्ठः क्रमेण ज्वरपीडया पीड्यमानः क्षीयमाणबल आत्मनोऽन्तिमं समयं समुपस्थितं मेने. तस्मिन् वीरश्रेष्ठे प्रतिज्ञापूरणचिन्तामग्ने सति अकस्मात् कश्चन माधवदासनामा विरक्तोऽपि समर्थः पुरुषवरस्तं द्रष्टु-कामो नांदेडग्राममागच्छत्. बहवः शीखधर्मानुयायिनः स्वगुरुं रुग्णमाकर्ण्य तत्राययुः. माधवदासस्तु अलौकिकतेजस्विनी

तपःप्रभावभासुरां तस्य गुरुगोविन्दसिंहस्य मूर्तिमवलोक्य विस्मितः संजातश्रद्धस्तद्दिनमारभ्य तदीयं शिष्यत्वं स्वीकृत्य गुरुमसेवत.

वीरश्रेष्ठो गुरुगोविन्दसिंहस्तु सर्वान् स्वशिष्यान् शीखधर्मानुयायिनस्तत्र समुपस्थितानवेक्ष्य मुदितः सर्वानाहूय जगाद. वत्साः ! अहं च चरमं युष्माकं मुखानि पश्यामि. मन्ये समुपस्थित एव मे स्वर्गप्रयाणसमयः. अद्यापि मया प्रतिज्ञापूरणं न कृतं. तन्मां रात्रिंदिवं दहति. मदीयप्रतिज्ञापूरणार्थं प्रयतमानौ मम पुत्रौ पुरैव मां विहाय स्वर्गमगच्छतां. तदर्थमपि अहं किमपि नाकार्षं. अनया चिन्तया दंदह्यमानोऽहं सुखेन प्राणान् हातुमपि न प्रभवामि. तत्को वा भाग्यशाली मदीयप्रतिज्ञापूरणार्थं प्रतिजानन् मामस्माद्दुःखान्मोचयितुमिच्छति ! अद्यपर्यन्तं मया ये ये क्लेशा अनुभूतास्ते केवलं शीखधर्मरक्षणाय. तस्य धर्मस्य सेवका यूयं. अहमपि युष्माकमेवान्यतमः. तद्गुरोर्वा धर्मबन्धोर्वा ममेमां प्रतिज्ञां पूरयितुं यो मे वचनं दद्यात्तस्य शुभं चिन्तयन्नचिरादेव समापयामि मदीयमवतारं. पुत्रोऽप्येतदर्थमेव पित्रा प्रार्थ्यते. तद्यः प्रतिज्ञां पूरयितुमिच्छति स मे पुरतः समागत्य मदीयं चरणारविन्दं स्पृष्ट्वा तथा शपथं गृण्हात्विति.

उक्त्वा चेत्थं विरते तस्मिन् वीरश्रेष्ठे गुरुगोविन्दसिंहे सर्वेषु शिष्यगणेषु प्रबलं दिल्लीश्वरं स्मृत्वा प्रतिज्ञापूरण आत्मानमसमर्थं मत्वा साशंकं परस्परमुखावलोकनतत्परेषु सत्सु अयं माधवदासः पुरतः समागत्य गुरुपादारविन्दं स्पृष्ट्वा तथा

शपथमकरोत्. अगदच्च—गुरुपादाः ! अहं हि यदाप्रभृति त्वां गुरुत्वेन शरणमागतस्तदारभ्य तवैव सेवकः संवृत्तः. सेवकस्येदमेव कर्म यत्केनाऽपि प्रयत्नेन स्वामिनश्चेतसि सन्तोषोत्पादनं. तच्च यदनया रीत्या संपद्यते तदा तथा करिष्यामि. दिल्लीश्वरो बलाढ्यः स्यान्नाम. तथापि गुरुकृपाबलान्न सैनिकबलं वा श्रेष्ठमिति मे मतिः. तन्मया कृतां त्वत्कृतप्रतिज्ञापूरणाप्रतिज्ञां मदीयहृदयवासिनी गुरुकृपैव संपादयतु. अहं च तत्र केवलं निमित्तमात्रमिति.

तं च माधवदासं गृहीतस्वप्रतिज्ञापूरणार्हमवलोक्य सन्तुष्टः सानन्दमवदत्—वत्साः ! अनेन माधवदासेन सत्यमेवाहं मोचितोऽस्मि. इत ऊर्ध्वं मम स्थान इमं मन्यमाना यूयं सर्वेऽपि सर्वदेममेव साहाय्ययत. एष च सर्वेषां नो मनोरथान् पूरयिष्यति. अयं चेत ऊर्ध्वं माधवदासनाम्नाऽनभिधीयमानो बंदाबहादुरनाम्ना व्यपदेष्टव्यः. अहं चेदानीमुत्तरायावर्तमागन्तुं न शक्नोमि, तथापि मदीय आत्मा युष्माकं पराक्रमांस्तथा शीखधर्मपालनतत्परतां चावलोक्य सुखी स्यात्. वत्स ! माधवदास ! त्वमपि सर्वान् सन्मार्गे प्रवर्तयन् दुर्लभमपि काशसंकाशं शाश्वतं यश आप्नुहीति.

अथ महताऽऽनन्देन भगवदाराधनतत्परः स वीरश्रेष्ठो गुरुगोविन्दसिंहो द्वितीयदिने भास्करमुदितं प्रणम्य शान्तमनसा प्राणाञ्जहौ. सर्वेऽपि शिष्यास्तद्वियोगशोकाकुला अपि तत्कृतमुपदेशं स्मरन्तो महताऽऽनन्देन तदीयं देहमग्निना संस्कृत्य प्रथमं तत्कृतां प्रतिज्ञां पूरयितुमिच्छवो महता जवेनोत्तरायावर्तमाययुः.

तत्रागत्यायं बन्दाबहादुरः सर्वेभ्यो गुरुगोविन्दसिंहस्य स्वर्गवासं निवेद्य तद्दत्तमाज्ञापत्रमदर्शयत्. न्यवेदयच्च कार्यगौरवं.

अचिरादेव दिल्लीश्वरं विलासमग्नमधिकारिवर्गं परस्परद्वेषपरायणमवलोक्य निर्भीकाः प्रकृत्यैव साहसिकास्ते शीखधर्मानुयायिनः स्वगुरोः प्रतिज्ञां पूरयितुमिममेव समयमनुकूलं मन्वानाः सहसा बन्दाबहादुरस्य साहाय्यार्थमाययुः. तांश्च मिलितान् कार्योत्सुकान् वीक्ष्य स सानन्दः प्रथमं यस्मिन्नगरे स्वगुरोः पुत्रयोर्वधोऽभवत्तत् सरहिन्दनगरं नाशयितुकामस्तदाचक्राम. आक्रम्य च कृपालवलेशहीनस्तत्रस्थान् सर्वानपि महंमदीयान् परलोकं प्रेषयित्वा तत्स्थानि सर्वाण्यपि गृहाणि भूमिसात्कृत्वा तन्नामशेषमकरोत्. ततश्च महात्मनस्तेगबहादुरस्य नाशको जलालुद्दीननामा यवनो यस्मिन् ग्रामेऽवसत्तं ग्रामं सामनाख्यमागच्छन् मार्गे दिल्लीश्वरकोशमात्मसात्कृत्वा तत्रस्थं द्रव्यं सर्वेभ्योऽदात्. तेन संतुष्टास्ते शीखधर्मानुयायिनः परं साहसोत्सुका अभवन्. ततो निवृत्तः स बन्दाबहादुरो मार्गे संपन्नानि यवनमयानि नगराणि लुण्ठन् सामनाग्राममाजगाम. तत्र च महात्मनस्तेगबहादुरस्य नाशकं जलालुद्दीनं हत्वा दशसहस्रसंख्याकान् महंमदीयानवधीत्. तथैव प्रायः समग्राण्येवोत्तरार्यावर्तस्थानि प्रमुखानि नगराण्याक्रम्य महंमदीयान् हत्वा स्वगुरुप्रतिज्ञामपूरयत्.

एवं सर्वत्र विजयीभूय बन्दाबहादुरः श्रीगुरुगोविन्दसिंहस्यावशिष्टं प्रतिज्ञांशं पूरयितुं प्रयतमानः क्रमेण प्रायतत. परन्तु

दिल्लीश्वरस्य बलाढ्यत्वेन सहसा तमप्यंशं पूरयितुं न शशाक. तथापि क्रमेण तमेवांशं स्वमनसि निधाय प्रयतमानाः शीख-धर्मानुयायिनः प्रतिदिनं वर्धमाना महाराजरणजितसिंहस्य समये तमप्यंशमपूरयन्. महाराजो रणजितसिंहः समग्रमुत्त-रार्यावर्तं सम्यक् प्रतिपालयामास. वाचकाः! वयं न शीख-धर्मस्येतिहासं वोत्तरार्यावर्तस्येतिवृत्तं लिखितुं वा प्रवृत्ताः! किंतु परमपवित्राणि शीखधर्मगुरूणां चरितानि लिखितुं. बन्दाबहादुरश्च न शीखधर्मस्य गुरुरासीत्किंतु तेषामग्रणीः. तस्माच्छीखधर्मस्य गुरुपदं वीरश्रेष्ठेन गुरुगोविन्दसिंहेनैव सह स्वर्गं जगाम. वीरश्रेष्ठो गुरुगोविन्दसिंहः स्वशिष्यं बन्दाबहादुर-मवदत्--मदूर्ध्वं कोऽपि न शीखधर्मगुरुः. किंतु यत्र कुत्रापि पंचशीखधर्मानुयायिनो मिलिता यं कमपि स्वधर्मानुयायिनं विधातुं शक्ष्यन्ति. त्वं तु सर्वेषामपि शीखधर्मानुयायिनां परमं सेवकमात्मानं मन्यस्वेति. सज्जनाः! यद्यप्यधुना परमपवित्र-ममृतसरनगरं तेषां क्षेत्रमस्ति, तत्र ग्रंथश्रेष्ठस्य पूजाऽपि प्रच-लति, तथापि न कोऽपि गुरुः. पंच मिलिताः शीखधर्मानु-यायिनो नूतनं मानवं वीरश्रेष्ठश्रीगुरुगोविन्दसिंहकथितनूतन-संस्कारेण संस्कृत्य स्वधर्मानुयायिनं विदधते. अद्यापि च तेषां शीखधर्मानुयायिनां हृदये यथा श्रीगुरुराजनानकदेवेन निहिता भक्तिरुल्लसति, तथैव तेषां हस्ते स्वसंरक्षणाय तथा दीनरक्षणाय च गुरुभिरर्जुनसिंहप्रभृतिभिः प्रदत्तं खड्गमपि. धन्यास्ते शीखधर्मानुयायिनः परमपवित्रं गुरुराजनानकदेवप्रभृतिभिर्गुरु-भिर्निर्मितं ग्रंथश्रेष्ठं प्रमाणीकुर्वन्तोऽधुनाऽपि खड्गधारणे

कुशला एवोत्तरार्यावर्ते विराजन्ते. सज्जनाः !, वीरश्रेष्ठेन गुरुगोविन्दसिंहेन परिस्थितिमवलोक्य विहितः संस्कारोऽपि तथैवानुवर्तते, पावयति चागणितान् पापिनः धन्यो गुरुगोविन्दसिंहः ! धन्यः स शीखधर्मः !





# उपसंहारः

१ सात्विकतेजसो निरतिशयं बलम्

२ राजसं बलं राजसेनैव नाश्यते.

३ उपसंहरणम्.

( १. )

महाभागाः! पाठकाः! यद्यपि परमप्रसिद्धानां लोकोत्तर-प्रभावशालिनां सकलभारतवर्षविख्यातनाम्नां दशानामपि शीख-धर्मगुरूणां चरितामृतं वर्णितकल्पमेव, तथाप्यधुना यदर्थं मया धन्यानामेषां चरितानि लिखितानि सोऽर्थोऽवशिष्ट एव. तं च सर्वेभ्यो बान्धवेभ्यो निवेद्य विरंस्यामि. सज्जनाः! सामान्यत इह जगतीतले केनापि कारणेनैश्वर्यस्य परां काष्ठामारूढा जना दीनान् कालवशात् सम्प्राप्तदैन्यान् परमोज्ज्वलेतिहासानपि नानाविधै-र्दोषैर्दूषयन्ति. विशेषतश्च भारतवासिनः प्रति अन्यदेशीया जना यैर्यैर्दोषैः स्वकपोलकल्पितैस्तथा दूषयन्ति यद्वक्तुमप्यशक्यं. तेषु सर्वेषु दोषेषु शमाधिक्यं प्राधान्येन दोषत्वेन व्यपदिश्यते. अस्मदीयाश्च केचन तैर्विसंवादितास्तदुक्तं सर्वमेव सत्यं मन्य-मानाः स्वयं विचारयितुमक्षमास्तथैवानुवदन्ति. तेन साधारण-

प्रज्ञा जनाः संशयदोलामारूढाः परममान्यं सकलसुखसाधनं शमस्वभावं त्यक्त्वा सकलदुःखकारणं राजसं स्वभावं ग्रहीतुमुत्सुका भवन्ति. तदेतदनिष्टं. तस्य परिहाराय सात्विकं बलं कियदुत्कटमिति द्योतनाय च पूर्वाणि चरितानि लिखितानि. अस्तु.

बान्धवाः ! प्रथममिहेदमवधारणीयं कीदृशं तत्सात्विकं बलं किंमूलकं चेति. अन्यथा वंचका जनाः स्वयमलसाः स्वयोगक्षेमाय शमस्वभावं दर्शयन्तः परानपि स्वसदृशान् कुर्वन्ति. तेन सम्प्रति सात्विका जना अलसेभ्यो नातिरिच्यन्ते. वस्तुतस्तु अलसो हि न सत्वस्य धर्मः किंतु स तमसः. परन्तु बाह्यविषयलालसाहीनत्वं साधारणधर्ममनयोः स्वीकृत्य तथा ते व्यपदिशन्ति. तस्मादस्मिन् महामोहस्थाने जनैः सर्वैरपि सावधानेन वर्तनीयं. सर्वस्यानर्थस्यास्य परिहरणाय सात्विकं बलं सलक्षणमुपपादनीयं. येन साधारणा जना अपि आंजस्येन सात्विकं बलमवगच्छेयुः.

सज्जनाः ! ये खलु लोकोत्तरधैर्यशालिनः पुरुषा असंख्यान्यपि दुःखान्यगणयन्तोऽगणितानपि पर्वतकल्पानपि विघ्नराशीनपश्यन्तः सदैव दुःखपीडितानामनाथानां दुःखपरिहाराय प्रयतन्ते, स्वप्राणानपि व्ययीकृत्यान्यान् परिरक्षन्ति, ते खलु सात्विका जनाः साधुपदेनेह भारतवर्षे व्यपदिश्यन्ते. ते च शरीरेण साधारणा अपि येन बलेनेदृशान्यलौकिकानि कार्याणि कर्तुं प्रभवन्ति तदेव सात्विकं बलं. तदेवास्य दृश्यमानस्य संसारचक्रस्य रक्षकं. यद्येतत्त सात्विकं बलं जगति नाभविष्यत्तदा रजोगुणा-

तिरेकप्रवृद्धविषयलालसा मानवाः परस्परं भक्षयन्त इदं संसारमण्डलं नामशेषमकरिष्यन्. भूयो भूयः समुत्पन्नाः सात्विका जनाः शमोपदेशेन रजोगुणवृद्धिं न्यूनीकुर्वन्तोऽपि रजोगुणाढ्यबहुलजनमिमं संसारं सुखमयं कर्तुं न प्रभवन्ति. तदैतेषामभावे कीदृशी स्थितिरस्य जगतोऽभविष्यदिति कुशाग्रमतिभिर्भवद्भिरेव विचारणीयं. पाठकाः! यदोत्तरार्यावर्ते यवनप्राबल्यमभूत्तदा सर्वेऽपि आर्यवंशजास्तेषां समृद्धिमवलोक्य तथैव वर्तितुमारभन्त, तस्मिन्नेव समये गुरुराजो नानकदेवः प्रादुर्भूय जनानां चेतांसि सम्यगुपदेशेन संस्कृत्य तान् राजसप्रवृत्तेः सकाशान्निवर्तयामास. सज्जनाः! सात्विकाः जनाः कदाऽपि व्यापारान्नोपारमन्ते. विघ्नैः पुनः पुनः प्रतिहन्यमाना अपि सोत्साहं प्रवर्तन्ते. न तामसवज्जाड्यमवलंब्य तिष्ठन्ति. परन्तु राजसेभ्यः परं भेदस्तेषां. राजसा हि साभिनिवेशं यत्किंचित्कार्यं कुर्वाणाः साभिलाषा एव प्रवर्तन्ते, ते च परेषां दुःखापेक्षया स्वसुखमेव ज्यायो मन्यन्ते. सहस्रावधीनपि मानवान् हत्वा यदि सुखलवोऽपि लभ्यते तदा तमपेक्षमाणा निःसंशयं ताञ्जीवान्घ्नन्ति. बान्धवाः! इम एव नरराक्षसाः शास्त्रेषु दैत्यपदेन व्यपदिश्यन्ते. सात्विकाश्च प्रथमत एव स्वसुखे निरभिलाषाः परदुःखहरणायैव प्रयतमाना न कदाऽपि पापमाचरन्ति. राजसाश्च विपरीतं कार्यमवलोक्यात्मानमपि घ्नन्ति. यदि वा तत्कार्यं त्यक्त्वा विरमन्ति. परन्तु सात्विकाः प्रारब्धात् कार्यान्न विरमन्ति प्रत्युत परमात्मानमात्मनः सहायं मन्यमानाः सधैर्यं प्रवर्तन्ते. सात्विकानां बलं विशेषतोऽहंकारराहित्येन वर्धते.

तस्मात् सज्जनाः ! कर्तृत्वाहंकाररहितं लब्धपरमात्मसहायं परोपकारफलकं सात्विकं बलं सर्वथा विपरीताद्राजससबलान्निरतिशयश्रेष्ठमिति किमु वक्तव्यं ! एतादृशं सात्विकं बलं न मानवीयं किंत्वैश्वरं. ईश्वरो वैतान् सर्वथा रक्षति. न च कश्चनेश्वरापेक्षया बलिष्ठः. ऐश्वरं बलं सहायत्वेनाश्रय जगति दीनदैन्यपरिहारार्थं प्रयतमानास्ते सात्विकाः साधुश्रेष्ठाः कथं मानवबलान्धान्नरराक्षसान्न पराजयेरन्. कथं वा तेषामेव यशः शाश्वतं न स्यात् ? तस्माद्बान्धवाः ! सात्विकं बलमेव सर्वबलापेक्षया निरतिशयमिति निश्चयेन जानीत.

( २ )

"बांधवाः ! यद्यपि कथितरीत्या सात्विकं बलमेव सर्वबलश्रेष्ठं तथापि तद्राजसेन बलेन प्रत्याहतं सद्राजसं रूपं धृत्वैव तन्नाशयितुं शक्नोति नान्यथा. यथा हि स्वयं दाहकोऽप्यग्निः काष्ठमारुह्यैव काष्ठान्तरं दग्धुं शक्नोति नान्यथा, यथा वा सर्वालंकारमूलभूतमपि सुवर्णं कमप्याकारं धृत्वैवाकारान्तरं जनयितुं प्रभवति न चान्यथा, यथा च वा प्रौढप्रखरप्रकाशकोऽपि सूर्यः सूर्यकान्तप्रतिफलितकिरण एव कार्पासं भस्मीकरोति, तथैव निरतिशयमपि सात्विकं बलं राजसेन बलेन पीडितं राजसं रूपं धृत्वैव तन्नाशयितुं प्रभवति न स्वरूपेण. यथा चेहैव गुरुराजनानकदेवप्रभृतिभिः परममान्यैः शीखधर्मगुरुभिर्महता प्रयत्नेनोत्पादितं शीखधर्मानुयायिहृदयकमलवासि सात्विकं बलं रजोगुणप्रधानेन दिल्लीश्वरेण गुरावर्जुनसिंहे बन्दीकृतेऽपि न तं मोचयितुं प्राभवत् ! किमत्र कारणं ? ऋते

तस्य सात्त्विकबलस्य राजसरूपतानंगीकारात्. तस्माद्यादृशो यक्षस्तादृशो बलिरिति न्यायेन राजसप्रवृत्तिनाशे राजसवृत्त्याश्रयणमावश्यकं. यथैव चरिते गुरुहरगोविन्दसिंहप्रभृतिभिः संपादितं राजसं बलं दिल्लीश्वरराजसप्रवृत्तिप्रतीकाराय समर्थमभूत्. इदं त्विहावधेयम्. या तु निसर्गत एव राजसी प्रवृत्तिः सा च प्रवर्तमानं पुरुषं नाशयित्वैव विरमति. सततं च विषयलालसां वर्धयन्ती न सुखाय कल्पते. सात्त्विकी तु राजसबलेन प्रत्याहता क्षणमात्रं तन्नाशाय राजसं रूपं धृत्वा कर्तव्यं विधाय पुनरपि स्वरूपेणावतिष्ठते. यथा गंगोदकं स्वभावत एव निर्मलं कलुषितजलसंबंधात् क्षणमात्रं कलुषितं भवति, यथा वा नटः प्रेक्षकाणां सुखाय शकुन्तलारूपं धृत्वा कर्तव्यं विधाय पुनरपि स्वरूपेण वर्तते, तथैव सात्त्विकी प्रवृत्तिः. यथा च क्षणमात्रं रूपान्तरं प्राप्ताऽपि सात्विकी प्रवृत्तिर्न स्वरूपं जहाति तथा शीखधर्मगुरुभिर्गुरुगोविन्दसिंहप्रभृतिभिः प्रदर्शितमेव. सज्जनाः! सात्त्विकस्य बलस्य राजसबलापेक्षया श्रेष्ठत्वेऽन्यदपि प्रमाणमस्ति. तदिदं—स्वल्पमपि सात्त्विकं बलं बलीयसाऽपि राजसेन बलेन नाभिभूयते. अभिभूतमपि न नामशेषं भवति. प्रत्युत तद्वेगेन वर्धते च. यथैव क्व समस्ताक्रान्तभूतलस्य दिल्लीश्वरस्य सामर्थ्यं, क्व च स्वल्पानुयायिभिरनुयातस्य वीरश्रेष्ठस्य गुरुगोविन्दसिंहस्य. परन्तु राजसं दिल्लीश्वरबलं सात्त्विकं शीखधर्मानुयायिबलं नाशयितुं नाशकत्. किमत्र कारणं? ऋते सात्त्विकबलस्य श्रैष्ठ्यात्. बान्धवाः! सर्वस्यास्य जगतीतलस्येतिहासे तैस्तैः

प्राज्ञवरैर्लिखिते सात्त्विकबलस्य नाशाय प्रवृत्तानां राजसानां नरराक्षसानां कथाः सन्ति, परन्तु अन्ते तेषां दुरवस्थैव लक्ष्यते. अल्पीयसा सात्त्विकबलेन तेषां पराजय एव विहित इति ज्ञायते. यदि च राजसं बलमेव सर्वोत्तमं! राजसी प्रवृत्तिरेव श्रेयस्करी! तदा कथं बलाढ्या रजोगुणप्रधाना जना दुर्बलैः सत्त्वगुणप्रधानैर्जनैः पराजिताः! कथं च तैः क्षणिकं राजसं बलं स्वीकृत्य विनाश्य च तान् पुनरपि स्वस्वरूपमाश्रितं! क चाक्रान्तचतुर्दशभुवनो लंकाधिपः, क च केवलमेकाकी मानवो रामचन्द्रः, क च बलाढ्यधनुर्विद्याविशारदद्रोणाचार्यवीरसहायाः सार्वभौमाः कौरवाः, क च पंच असहायाः पाण्डवास्तथापि तेन रामचन्द्रेण कथं तादृशो लंकाधिपो निहतः! कथं च तैरेव पाण्डवैः सर्वे कौरवाः समरभूमौ शायिताः! इति महच्चित्रमिवाभाति. वस्तुतस्तु अत्राश्चर्यस्यावकाश एव न. खदिरांगारसदृशी सात्त्विकी प्रवृत्तिस्तृणाग्निसदृशया राजसप्रवृत्त्याऽभिभूयमानाऽपि अविनश्यन्ती अनुकूलं समयं प्राप्य तामेव नामशेषां करोति. मान्याः! स्पष्टेऽप्यस्मिन फलभेदे यदि सात्त्विकीं वृत्तिं परित्यज्य राजसीं परिगृह्यते, तदा रत्नं त्यक्त्वा काचं गृण्हतो मूर्खस्य साम्यं वयं लभेम. यथा स्वल्पजलोऽपि सततवाही जलनिर्झरो मार्गे प्राप्तं कलुषं जलसंघं क्रमेण निर्मलं करोति नैवं सकलुषजलौघस्तं कलुषमेव विधातुं शक्नोति! एवमेव सततवाही बलाढ्यः सात्त्विकबलप्रवाहोऽकस्मादागतं राजसं बलं विनाश्य तत्पुनरपि स्वरूपं प्रापयति. तस्मान्मतिमता नरेण सात्त्विक-

प्रवृत्तेस्तथा बलस्य संपादनाय सततं प्रयत्नः करणीयः. प्रयत्नेन लब्धस्य तस्य परिरक्षणे यत्नो विधेयः. ये खलु महाभागा अद्यावधि अस्य सात्त्विकबलस्य रक्षणाय तथा मध्ये मध्ये समुद्भूतस्य राजसबलस्य नाशाय सततं प्रयतमानास्ते साधवः कथं न वंद्याः! इह जगतीतलेऽद्यावधि ये खलु परपीडया स्वसुखसंपादनेन धन्यंमन्या रजोगुणप्रधाना राजानः संवृत्तास्तेषां कीर्तिश्चिरस्थायिनी जाता? अथवा परपीडापरिहारार्थं प्रयतमानानां सत्वगुणानां साधूनां यशः शाश्वतमभूत्! विचारशीलो मानवः सर्वं मानवजातीतिहासमवलोक्य वदेन्निःसंशयं सज्जनानामेव कीर्तिः शाश्वततामलभतेति. तद्बान्धवाः! यूयमेव वदत—कतरच्छ्रेष्ठमिति. राजसबलनाशाय सत्त्वगुणेन स्वीकृतं राजसं रूपं क्षणिकं कार्यार्थं चेति तन्न तस्य हीनतामापादयितुं शक्नोतीति सुधीभिरवधारणीयम्.

पाठकाः! सर्वमिदं चरितामृतं समाप्तकल्पमेव. तस्य ध्येयमपि वर्णितमेव. इदानीं केवलमुपसंहारः करणीयः. भारतवर्षे स्थाने स्थाने परोपकारपराः सात्त्विकाः साधवः समभवन्. तेऽपि लोकोत्तराणि कार्याण्यकार्षुः, परन्तु शीखधर्मे यादृशी राजसबलाहतिरभून्न तथाऽन्यत्र कुत्रापि. दिल्लीश्वरप्रभृतयः परकीया धर्मान्धा यवनाः सर्वानपि शीखधर्मानुयायिनस्तद्गुरूंश्च यादृक् पीडयामासुर्न तथाऽन्यः कोऽपि. तेन तेष्वेव सात्विकबलस्य निरतिशयश्रेष्ठत्वं प्रकटीबभूव. सज्जनाः! एतदर्थमेव मया तेषामेव चरितामृतं लिखितं. धन्यः स शीखधर्मस्याद्यः स्थापको गुरुराजो नानकदेवः,! धन्यः स स्वसंरक्षणार्थं तथा

दीनपालनार्थं खड्गरूपेण राजसं रूपं धारयन् गुरुर्हरगोविन्दः! धन्यः स महात्मा तेगबहादुरो यस्तस्य राजसरूपस्य पूर्णत्वाय स्वात्मानमपि बलिमकरोत्. ! धन्यः स वीरश्रेष्ठो गुरुगोविन्दसिंहो यः पितृवत् स्वपुत्रावपि तत्याज. महाभागाः ! इदं संपूर्णं वृत्तं न केवलं शीखधर्मस्य वा तद्गुरूणां वेतिवृत्तं किंतु बलाढ्येन राजसबलेनाभिभूतस्यापि क्षणं राजसरूपं धृत्वा तदभिभावकं राजसं बलं निहत्य चिरंजीविनोऽल्पस्यापि महाफलस्य सात्त्विकबलस्य. इदं पठित्वा सात्विकं बलं कथं सर्वाण्यपि बलान्यतिशेत इति सर्वेऽपि जानीयुः. महाभागाः ! बान्धवाः! इदं भगवता प्रदत्तं भारतवर्षस्य नैसर्गिकं बलं कालवशात् परकीयेन राजसेन बलेनाभिभूयमानं क्षुद्रमिति मा मनुत. मा च त्यजत. इदमेव राहुग्रहमुक्तः सूर्य इव शीघ्रमेव बलाढ्यं राजसं बलं निहत्य सर्वत्राप्रतिहतप्रकाशं स्फुरेत्. सर्वे च जना अन्ते युष्मानेव स्वसंरक्षणाय प्रार्थयेयुः. भगवान् सकलजगच्चालकः सर्वामपि प्राप्तामिमां राजसीमापदं दूरीकृत्य शमप्रधानान् सात्विकान् वो विदधात्वित्यहं परमात्मानं प्रार्थयामि. दीनवत्सलः परमेश्वरस्तथा कुर्यादेवेति शम्.

